श्री लक्ष्मीकान्तम् with comm. सम्बोधिनी by
प. श्री गोस्वामी लक्ष्मीनाथ जी कविराज –
Ed. & Pub. by his ~~some~~ son Pt. श्री जगन्नाथशर्मा
– The author has narrated the six system of
Indian Philosophy in a Poetic Style with
an elaborate commentary.
बनारस 1954 Vikram era.

55

Bill No. 5/07-08
93
2008-0552



# श्री लक्ष्मी काव्यम्

सबोधिन्या टीकया सहितम्

श्रीमत्पण्डित कुल दिवाकर श्री गोस्वामि वंशा
वतंस महा कविवर वजीराबादपुर निवासी
श्री गोस्वामी

## श्री लक्ष्मीनाथ विरचितम्

तत्सूनुना तदाज्ञा वश वर्तिना
श्रीमत्पण्डित अमरनाथ शर्म्मणा
मुफीद-आम नामके मुद्रा यन्त्रे विक्रमार्कतः
१९५४ संवत्सरे मुद्रापितम्।

# THE LAKSHMI KAVYA

**By the famous Sanskrit Poet**

GOSWAMI LAKSHMI NATH
OF WAZIRABAD.

Indira Gandhi National Centre for the

1194

# THIS POEM

IS MOST RESPECTFULLY DEDICATED

TO

*H. H. Sir Raja Amar Singh Bahadur, K.C.S.I.,*

OF

**JAMMOO AND KASHMIR,**

Indira Gandhi National
Centre for the Arts

BY

PANDIT AMAR NATH,

*Officiating Tehsildar, Rawalpindi,*

**THE SON OF THE AUTHOR.**

***Rawalpindi:***

*27th September 1897.*



# अथ लक्ष्मी काव्यम्



ओं नमः श्रिये

ओं श्रीशारदा शार[illegible] लच्मीरे चन्द्रावधीरिणीमास्य रुचिंदधाना
नकरह
भावेषुकुर्य्यां [illegible]णां निषण्णां पण्णां श्रुतानामपि
मेऽश्रुतानां ॥ १ ॥

Indira Gandhi National

ओं श्रीगणेशायनमः ॥ ओं नमः सरस्वत्यै ॥ ओं नत्वा गिरं गुरुं गौरीं गिरीशं गिरजात्मजं स्वयंकृतमदः काव्यं स्वयंव्याख्यायतेमया १ प्रत्ययाद्यैरिह प्रायो यत्पदं विवृतंमया न भूयोविवृतिस्तस्यकृता विस्तरभीरुणा २ इहखलुनिखिल सज्जन समाज विभ्राजमानमैत्रीमर्यादादिसद्गुणपरस्फीत रुदा चरणगाथ श्रीमत्प्रमथ नाथ पदपाथोज निरंतरध्यानगोष्पदीकृत दुस्तरसंसृतिपाथो नाथ गोस्वामी वंशावतंसस् श्रीमच्छम्भु नाथ चरणनीरजद्वयीद्विरेफायमान मानससमुन्मिषदोषद्विज्ञानरविः श्रीलक्ष्मीनाथकविः काव्यं यशसेऽर्थं कृतेव्यवहारविदे शिवेतरक्षतये सद्यः परनिर्वृतये कांता सम्मिततयो पदेशयुजे इत्याद्यालंकारिकवचनप्रामाण्यात् काव्यस्यानेकश्रेयो ऽ साधारण कारणत्वावच्छिन्नतामाकलय्य तत्रापि निजोत्पादित ब्रह्माद्यखिल सुर

मुकुटकोटि निघृष्टपादारविंदायाः परायाः शक्त्याः श्री महालक्ष्म्याश्चरित्र
वर्णन रूपस्य तस्य विशेषतः करामलवत्सायुज्यादिमुक्तिचतुष्टययोग क्षेम
प्रतिपत्ति फलदातृतां च संभाव्य महिष मिथनाख्य लक्ष्मीकाव्य निर्मिति
जातसमुत्साहः तन्निर्माणेचप्रतिभाप्रभृति समुदित कारणकलापं स्वस्मिन्न
संपन्नं परामृश्य तद्धेतुभूतायाः श्री वाग्देव्याः सकाशात्तन्निष्पत्तिं प्रार्थयन्नवि
गीतशिष्टाचार विषयत्वाच्छास्त्रावश्यकर्तव्यताकं, प्रारिप्सि तपरिसमाप्ति परि
पंथि प्रत्यूह समूह विध्वंसक्षमं श्री शब्दपूर्वक माशीर्वाद रूपं मंगल माचरति
“श्री शारदेति” श्रिया शोभया युक्ता शारदासरस्वती मेममधिषणां बुद्धिं षण्णां
श्रुतानां वेदांतादि षट्शास्त्राणां भावेषु अभिप्रायेषु निषण्णां कुर्यात् षट् शा·
स्त्राभिप्रायावगाहिनीं कुर्यादित्यर्थः कीदृशानांश्रुतानां मेमम अश्रुतानामपि
तर्हिंका विचारनादिकथा। अत्रमे इतिपदस्यदे[illegible]पकन्यायेनोभाभ्यां संबंधः
कीदृशी श्रीशारदा शरदि आश्विन का[illegible]यऋतौ भवाः शारदाः
तेचपद्म संख्यापरिच्छिन्नाश्चंद्रास्तानवधीरयितुं [illegible]स्कर्तुं शीलमस्याईदृशीं
आस्यस्य मुखस्यरुचिंशोभांदधाना बिभ्रतीत्यन्वयः। ननुग्रन्थाधिष्टात्र्या महा·
लक्ष्म्यामंगलं कस्मान्नाचरितमिति शंकामपहर्तुं द्वितीयोप्यर्थः कार्यः। तथा च-
श्रियामहालक्ष्म्या सहिता शारदा श्रीशारदाकीदृशीश्री शारदाचशरदि भवौ-
यौपद्मचन्द्रौतत्समरुचिं तयोस्तिरस्कारिणीं मुखशोभांदधाना श्रियोरत्नाध्यानो
पहितत्वात्कमलाधिक्यं शारदायागौरध्यानोपहितत्वाच्चन्द्राधिक्यं प्रतिपादितं
शेषंपूर्ववत्। यद्वासा मा महालक्ष्मीः मेंधिषणामित्यादिपूर्ववत् कीदृशी माश्रिय
स्त्रिवर्गसंपत्यादेः ईशास्त्वामिनी प्रदात्रीतियावत् पुनः की० रदादंताविद्यंते येषां
तेरदादन्तिनस्तानश्नातिभुनक्तीतिरदाशः सिंहः तदुपरि अरंशीघ्रं भक्तेभ्यो
निजेष्ठं दत्तइत्यरदौ तादृशौ यौ पदौ अंघ्रीतयोर्माशोभायस्याः सा रदाशारदप
द्मसिंहारूढेत्यर्थः साचेभंचन्द्रन्यक्कारिणीशोभयेतिशेषः सातथाधर्मलुप्तोपमेयं
पुनः की० आस्यरुचिंमुख शोभांदधानेति यद्वाअस्यमेममभक्तस्य स्वस्मिन् रुचिं
अभिलाषाभक्तिं दधानांपोषयन्ती धिषणांषण्णांश्रुतानां भावेषु निषण्णांकुर्यात्।

Centre for the Arts

यद्वाय: विष्णुस्तस्यस्वस्मिन्नभिलाषां धारयन्ती विष्णुशक्तित्वात् यद्वा साध्वी शारदा सकलवर्णात्मिका कुंडलिनी अनेक शारदचन्द्रतिरस्कारि मुखद्युति शालिनी यद्वा शारदमप्रतिमं नूतनंवायत्पद्मं ब्रह्मरंध्रीय सहस्रारकमलं तदवधितत्पर्यंतमोरिणीगतूरा तथा मालक्ष्मीराख्ते ऽस्मिंस्तत् मासं कमलं तत्रभवोमास्यो मृनालतंतुरित्यर्थ: तद्वद्रुचिंशोभांदधाना मूलादिब्रह्मरंध्रांत-स्फुरद्विद्युल्लताकृतिं ध्यायेत्कुन्डलिनीं देवीं विसतंतुतनीयसी मितिध्यानात् शारदो ऽब्देस्त्रियां तोयपिप्पलीसप्तपर्णयो: सस्येक्लीवं शरज्जातनूतनाप्रति भेत्रिष्वितिमेदिनी। मेधिषणां पर्णांश्राधारा दिषट्चक्राणां विभावेषुधारणा रूपाभि प्रावेषुनिषण्णांनिश्चलां कुर्यात्को० षट्चक्राणां मयायोगशास्त्रे षु श्रुता-नामपि अश्रुतानां नसम्यगवधृतानां धारणाशैथिल्यादित्यर्थ: वस्तुतस्तु सर्वस्याद्यभूता श्री महालक्ष्मीरेवत्रिगुणोपहिता कालीसरस्वती लक्ष्मीरूपेणा-पिनीयते तदुक्तं प्राधानिकरहस्ये सर्वस्याद्यामहालक्ष्मी स्त्रिगुणासकलेश्वरी लक्ष्यालक्ष्यस्वरूपासाव्याप्यकृत्स्नंव्यवस्थितेति चनदेवरुद्रयामलादौ बहुधा प्र-पश्चितं ग्रन्थ विस्तरभयान्नेहलिखम् एवमुत्तरत्रापि पार्वत्यादि वाचकैर्गिरिजा-दिनामभिर्महालक्ष्मीरेवलक्ष्या। सकलमूलविष्णुपक्षेतु हेश्रियैशलक्ष्म्या ईश्वरा-मिन् तथा हे शरद परंशीघ्रं स्मरणाव्यवहितोत्तर क्षणएवेतियावत्भक्तेभ्योवर्गच तुष्टयं ददातीतितादृश तथाहे आशांतृष्णांविषयाभिलाषं रदतिनाशयतीति-तादृश तथाहेपद्मसंख्याक चन्द्रतिरस्कारकीं मुखशोभांदधान तथा हे श्र विष्णो भवान् ममधिषणांसस्नांश्रुतानां भावेषु निषण्णांकुर्यादितियोजना शेषंपूर्ववत्। श्रीकृष्ण पक्षेतु हेश्रीशारदाशारद सारंजलंददतीतिसारदा: प्रलयकालीन मे-घा:श्रिया विद्युत्स्तनिताद्युपकरणेनसहिता: सारदा: श्रीसारदा: तेषामासारं मुशलतुल्यधारा संपातं रदति गोवर्धनधारणेनखण्डयतीति सतथा यद्वासारंजलं मेव हाराददातीतिशारद: इन्द्रस्तस्याशांव्रजंमेघैर्ब्रीडया मोत्यभिलाषंरदतीति स तथाशेषं विष्णुपक्षवत्। श्रीरामपक्षेतु श्रियायुक्तंसारंजलंयस्यस श्रीशारस्स मुद्र: तत्तारणायदाशकैवर्तरूप यद्वा श्रीयतेइतिश्री: संहति: यद्वाश्रयत्यध्यास्ते

शुत्तिरजत वत्परमात्मानमितिश्रीः सद्वतिः सैवसारंजलंतत्तारयायकैवर्तरूप कैवर्तदाशधीवरावित्यमरः तथा आरंअरिसमूहं रावणप्रभृतिकं द्यतिखण्डयती तिसतथा शेषंपूर्ववत् यद्वा श्रियाशोभयायुक्तः शारोहरिणः सीता प्रलोभनार्थं धृतकांचन मृगस्वरूपोमरीचिरित्यर्थः तंद्यतिखण्डयतीतिसतथा तथा आशां विषयाभिलाषं रदतीतिसः यद्वा आशा अर्थात् दश रावणशिरांसिरदतीतिस तथा शेषंपूर्ववत् यद्वाश्रियायुक्तं शारंशररूपंयस्य यद्वा श्रियायुक्तंशारमिति सारंवलंयस्यसतथा। दशशिरांसि यस्यसदाशोरावणस्तमरमत्यर्थं द्यति खण्ड- यतीति दाशारदः शेषंपूर्ववत्। श्रीहनुमत्पक्षेतु श्रीः सीता तदीशोरामः तस्यआरं रावणाद्यरिसमूहंद्यतीति स तथा आशासुदिक्षु रमणिं ददातीति सतथालंकादाहसमयेइतिशेषः यद्वा आशया रावणायकिंचिद्बलं प्रदर्शयामीति अभिलाषेण लंकायां रमणिंददातीति स तथा पद्मांश्च दयतीति पद्मचन्द्रः सूर्यः सधरतिरस्कारिणीं मुखशोभांआसमंतात् दधान यद्वापद्मचन्द्रः सूर्यः तदवधि तत्ययंतमोरिणीमास्यस्यमुखस्यरुचिमभिलाषंदधान पूर्वं हिजातमात्र एव ह- नुमान्ससुदयंतं सूर्यं भक्षयतुं दूरतरंस्वमुत्यपपातेतिप्रसिद्धं शेषं पूर्ववत्। निखिलविघ्नहरगणपपक्षेतु हेश्रियेविद्यायाबुद्धेर्वाईश तथा हे अरंशीघ्रंद्यतिख ण्डयति विघ्नानितिताहश तथा हे आशारदपद्म रदादंताविद्यं तेयेषांतेरदादंति नः आशानांदिशांरदादिग्गजास्तद्वत्पद्मंशुंडाग्रगतविंदुजालकंयस्य घनेर्नाद ग्गजवत् मुखशोभापिसूचिताभवति यद्वादिग्गजास्तद्वत् पद्मलक्ष्मीः शोभेति यावत्यस्यसतथाहे चन्द्रस्यतरिस्कारिणींरुचिमभिलाषंदधान पुराहिअतिस्थूल वपुषंविकृताननंचवीक्ष्य हसतश्चंद्रस्यकांतिराहित्यहेतुना शापेनतिरस्कारो ग- णपतिनाऽकारि अइतिसंबोधने हेगणपमस्य आ पुरः स्थितस्यभक्तस्य मनधि- षणामित्यादि पूर्ववत् ॥ २ ॥ स्वेष्टदेवश्रीसदाशिवपक्षेतु हेश्रियाशोभया युक्त- ईश तथा हे अरं शीघ्रं ददातीति ताहश आशुतोषत्वात् यद्वा हेश्रीशारदेत्ये- कंपदं तत्र शाराविद्यंते यस्मिं स्तदारं चक्रं श्रीशायविष्णवे आरंसुदर्शनाख्यं चक्रं ददातीति ताहश पुराहिविष्णुः सहस्रेणकमलैः प्रतिदिनंहरंभक्त्यापूजि-

त्वान् एकस्मिन्दिनेतद्भक्ति परीक्षार्थं एकंकमलमलक्ष्यंहरोहृतवान् ततएक-
सूनंवीक्ष्यनिजनेत्रमेवोत्पाट्य कमलतयाहरिरुपढौकितवान् तद्भक्तिसंतुष्टेन
हरेणसुदर्शनाख्यंचक्रंहरयेदत्तमितिपुराणप्रसिद्धं यद्वा श्रीशस्यविष्णोरारंका-
लचक्रंद्यति नाशयति मृत्युंजयत्वात् तथा आशारूपंतृष्णारूपं रमस्रिं द्यति·
खण्डयति तादृश तथापद्मंकमलं तद्वत्मस्तकेचंद्रोऽस्यस्येतितादृश तथा हेदधान
सर्वधारक पोषकवा अइतिसंबोधने हे शिव अरिणीं जनिकृति बंधहेतुत्वादा-
त्मनस्तिरस्कारिणीं मम रुचिं विषयाभिलाषं आ समंतात् स्य नाशय तथाभवा·
न् समधिषणामित्यादि पूर्ववत् ॥ ३ ॥ प्रत्यक्ष देवसूर्यपक्षेतु हेश्रीशस्यविष्णोरा
रकाल चक्रकालपरिमापकत्वात् तथा हेदाशारद अत्र शसयोः सावर्ण्यं दासे
भ्यो भक्तेभ्योऽरंशीघ्रं ददातीतितादृश यद्वा शारमिति सारं बलं ददातीति
शारदः श्रियायुक्तः शारदः श्रीशारदः तत्सबुद्धौ तथा वृष्टिहेतुत्वात् आदि-
त्याज्जायतेवृष्टिरिति श्रुतेः तथा हे आशादिशोरदति किरणैर्विलेखयतीतिता·
दृश यद्वा आशादिश एव रदादंतायस्येति दंतरहितत्वात् तथा हे पद्म पद्भिः
पादैः किरणैर्मिनोतिविश्वंतैर्मा शोभायस्येतिवा पद्मोऽस्यऽस्येतिवापद्मकरत्वात्
तथा हे चन्द्रस्यतिरस्कारिणींरुचिंदीप्तिंदधान सूर्योदयेहिचं द्रस्यनिस्तेजस्क·
ता भवति यद्वा चन्द्रावधिचन्द्र मण्डल पर्यंतमीरिणीं गत्वरां रुचिं दधान
सूर्यप्रभयैव चन्द्रस्योपचयो भवतीति प्रसिद्धम् तथा हे आस्य आसराक्मुखाङ्ग
व आसेरा वेदस्तन्मयत्रयी मूर्तित्वात् आसरं मुखेचतन्मध्येतङ्गवेचेति मेदिनी
कोशात् अइति संबोधने हे सूर्यभवान्मेधिषणामित्यादि पूर्ववत् यद्वा हे
पद्मचन्द्र पद्मांश्चंदयतआह्लादयतीतितादृश हे सूर्य असरतमसस्तिरस्कारिणी
तव मा प्रभारूपाशक्तिः रुचिशोभांदधानासतीमेधिषणांपस्मां स्तुतानांभावेषु
निषण्णांकुर्यादिति अत्रादौप्रतिपाद्यदेवतायामंत्रोपिसूचितः तदुक्तं शारदा
तिलके वांतं वन्हिसमारूढं वामनेत्रेंदुभूषितं मंत्रमेतच्छ्रियः प्रोक्तंचिंतारत्न·
मिवापरमिति वांतंशकारःवन्हिः रकारः वामनेत्रमीकारः इन्दुरनुस्वारः तथा
चश्रीमितिनिष्पन्नम् मंत्रप्रसिद्धिदोषभयमाश्रित्यविंदोरभावः। अत्र सर्ग संख्या

Indira Gandhi National

श्लोक संख्या पिसूचिता तथाहि अत्रश्रीकारोपलक्षिताः सर्गाः ईशाः एका-
दशसंति तथा रुद्रेत्यनेनद्वात्रिंशद्वर्षोपलक्षिताः श्लोकाश्चात्र ईशाएकादश
तत्पश्चात् रुद्राशाः रुद्रैर्द्वात्रिंशद्भिः सहिता आशादशद्विचत्वारिंशदित्यर्थः एवं
चद्विचत्वारिंशदधिकैकादशशत संख्याकाः संतितेचाष्टाक्षरपादसंख्ययागण-
नीयाः खरदपद्मचंद्रेति प्रारंभकालीनसंवत्सरमपिसूचयति तथाच खंवन्हि
स्तदंकास्त्रयः तथा रदतिखण्डयति अंकानितिद शून्येन गुणितं शून्यमित्युक्तेः
तथा पद्मो निधिविशेषस्तदंकानव चंद्रेत्येकमिदं कृत्वा अधिकोनविंशतिशतंजातं
तादृशवत्सरेइति शारदइतिपदं प्रथम पक्षसप्तशरदृतौ आशेतिदशमीतिथौ आरेति
भौमवासरे च प्रारंभक्षणमपि सूचयति अत्र च श्रीशेत्यनेनलक्ष्मीनाथेति ग्रंथक-
र्तास्वनामाप्यभिहितम् शारदइत्यत्रतत्रभवइत्यर्थः अवधीरिणीति शीलार्थेइनिः
टिड्ढाणञित्यादिनाङीप् धिषणेतिधिधृषाप्रागल्भ्येधातुः धृषेर्धिषच् संज्ञायामि-
तियुच लक्ष्मी सरस्वती धीस्त्रिवर्गसंपद्विभूतिशोभासु उपकरणवेशरचनावि-
दग्धासुचश्रीरिति प्रथितेतिव्याडिः सारोबलेमज्जनिचस्थिरांशेन्याय्येचनीरेचध-
नेचसारंवलेऽन्यवत्सारसुदाहरंतीतिविश्वः रुचिःस्त्रीदीप्तौशोभायामभिषंगाभि
लाषयोरितिमेदिनी। भावः सत्तास्वभावाभिप्रायचेष्टात्मजन्मस्विति च पद्मोऽस्त्रीप
द्मके व्यूहनिधि सख्यांतरेंबुजेइति च बुद्धिर्मनीषाधिषणेत्यमरः। श्रुतंशास्त्रावधृ
तयोरिति च। अत्रपद्यांशारदेतिच द्विरुच्चारणाद्यमकालंकारः तदुक्तम् यमकं
भिन्नवाच्यानामावृत्तिःसंयुतायुतेति। इन्द्रवज्रावृत्तोपेंद्रवज्रावृत्तयोरुपजातिर्वृत-
रत्नाकरोक्तेयं यद्यप्यत्रांत्यलघुरूपसत्र तगणस्तत्र व्योमदेवतिकत्वाच्छून्यंफलमुक्तं
तथापि तावच्छ्रीपदप्रयोगाच्छुभमेवफलं तदुक्तं भामहेन्द्रदेवतावाचकाः श-
ब्दायेचभद्रादिवाचकाः तेसर्वेनैवनिन्द्याः स्युर्लिपितोगणतोपिचेति प्रायशोऽ-
स्मिन्सर्गेजनिरित्यादावप्युपजातयएव उपजाति लक्षणंयथा एकत्रपादेचरणद्वये-
वापादत्रयेवाऽन्यतरःस्थितश्चेत्तयोरिहानन्तरतदो हनीयाश्चतुर्दशोक्ताउपजाति
भेदातमेधिक इत्यादौचक्वचिदुपेंद्रवज्रापिउपेंद्रवज्राजतजास्ततोगौ। अत्रचश्री
महालक्ष्मीरूपः प्रधानोवीररसः शृंगारादयस्तदंगभूताः देवानांब्रह्मलोका

दिगमनोपायसाध्यंमहिषनिधनं फलम् अत्र च सर्गबंधत्वान्महाकाव्यत्वम् तथाचदंडी सर्गबंधोमहाकाव्यमिति वाच्यादंग्याधिक्येवोत्तमत्वं इदमुत्तममतिशयिनिव्यंग्ये वाच्याद्‌ध्वनिर्बुधैः कथितेतिलक्षणात् ॥ १ ॥

जनिर्न मेऽभूद्धरिनाभिपद्मान्न चाऽङ्गिरा मां जनयांबभूव।
देव्याश्चरित्रं परमं पवित्रं कथं ब्रुवे पीवरधीरधीरः ॥ २ ॥

संप्रतिकविःस्वाहंकारमपनयति जनिरिति अहंपीवरधीः स्थूलबुद्धिः अधीरोधैर्यरहितश्च देव्याः स्वयंप्रकाशात्मिकायाजगद्रचनाक्रीडाशीलायावा श्रीमहालक्ष्म्याश्चरित्रंमहिषवधरूपं कथंकेन प्रकारेण ब्रुवेवर्णयामि कीदृशंपरमंपवित्रं चकुतस्त्वंवर्णने नशक्तोसीत्याह मेमम जनिर्जन्म हरेर्विष्णोर्नाभिपद्मात् नाभूत् ब्रह्मापिनाभवमित्यर्थः तथा अंगिरानामर्षिरपिमांनजनयांबभूव मोत्पादितवान् बृहस्पतिरपिनाभवमितिभावः यदिब्रह्मावृहस्पतिर्वाहंभूयां तथापिकिंचिद्ब्रुवेइतिभावः अत्रजनिरित्यादिविशेषणद्वयस्यस्वस्मिन्ब्रह्मादयसाधारण कारणकार्यत्वप्रतिषेध सुखेननाहंब्रह्मेत्याद्यभिप्रायगर्भितत्वात्परिकरालंकारः जनिधातोर्घुराद्दिनणे कासादित्वादाम् धीरोधैर्यान्विते स्वैरेवुधेक्लीवंतुकुंकुमे इति विश्वः ॥ २ ॥

मुधा व्यतीयान्न दिवानिशं मे व्यर्थप्रलापैः शयनैश्च कामैः।
इति व्यवस्य प्रकरोमि यत्नं स चाऽस्तु सार्थो
गिरिजाप्रसादः ॥ ३ ॥

अशक्तश्चे त्तर्हिंकिमुप्रवृत्तोसीत्यत आह मुधेति अहमितिनिश्चित्य एतद् यत्नं काव्यनिर्माणरूपंप्रकरोमि इतिकिंमे मम दिवानिशमहोरात्र मुधा व्यर्थं नव्यतीयाद्यापयातु कैःव्यर्थप्रलापैः वृथैवलौकिकभाषणैर्दिनं

शयनैः स्वप्नैः कामेदारादिष्वभिलाषाभिस्वरान्विरित्यर्थः ममैषयत्नो गिरि जाया: पार्वत्याः प्रसाद सार्थः सहायकोऽस्तु यद्यप्यत्रप्रलापोऽनर्थकंवचइत्यमरो क्तेः प्रलापपदेनैवव्यर्थभाषणसिद्धेर्व्यर्थपदंव्यर्थं तथाप्यतिव्यर्थताद्योतनार्थत्वा-न्नदोष: यद्वाविशिष्टवा चकानां पदानां सतिपृथग्विशेषने विशेष्यमात्रपरतायाः सङ्कोचकेर्मार्दतपूर्वरंध्रे रित्यादौदृष्टत्वात्प्रलापपदस्य भाषणमात्रएवार्थोवोद्ध-व्यः ॥ ३ ॥

सवासवा स्ते सवभोजिपुंजा धराधराणां पिहिता दरीषु ।
पुनः पुन र्वाजिरिपो र्विभग्ना वनोवनावार्त्ततरा
विषेदुः ॥ ४ ॥

इति युक्त्या स्वात्मानमस्मिन् प्रयत्ने प्रवेशयोग्यं संभाव्य कथामवतारयति "सवा-सवाइति" वासवेनइंद्रेणसहवर्तमानाः सवं यज्ञं भोक्तुं शीलं येषां तेदेवाः तेषां पुंजाः समूहाः अतिशयेनार्त्ता दुःखिताः संतः वनस्य अवनौ भूमौ विषेदुः यत्तदोर्नित्यसंबंधात्तेके येवाजिनः अश्वस्यरिपोर्महिषात्पुनः पुनर्विभग्नाः पला यिताः संताः धराधराणां पर्वतानां दरीषुगुहासुपिहितास्तिरोहिता आसन्नि-त्यध्याहारः वष्टिभागुरिरल्लोपमित्यादिना अपीतुपसर्गाऽकारलोपः यज्ञः सवो-ऽध्वरोयागाइत्यमरः क्ष्मावनिर्मेदिनीमहीतिच पादादियमकमिदं ॥ ४ ॥

अपीडिता स्ते विजने भ्रमंतो ऽगा ऽगेंद्रस्य भया दिवाऽस्य ।
गुरोः पुरस्ता च्च मिथो मिलित्वा संमंत्रयामासु
रमर्त्य संघाः ॥ ५ ॥

"प्रपीडितादति" ति अमर्त्य संघाःदेवसमूहाः यस्य महिषस्य भयात् विजने जनसंचार रहिते वनेभ्रमंतः संतः प्रपीडिता अतिदुःखिता आसन् कस्यभया त्कइव मृगेंद्रस्य सिंहस्य भयात्मृगाइव अथचगुरोर्बृहस्पतेः पुरस्तात् अग्रेमिथः परस्परं मिलित्वा सम्यक् मंत्रयामासुः अत्रदेवानां मृगतुल्यत्वान्महिषस्य च सिंहतुल्यत्वात्तुल्योपमा ॥ ५ ॥

तमोधिके सर्वसमृद्धिजुष्टे स्वनिघ्नबंधावविचिंत्यशौर्ये।
न सामदाने न च भेददण्डौ वयं समर्था महिषे प्रयोक्तुम् ॥ ६ ॥

किंमंत्रयामासुरित्यत आह "तमोधिकइति" वयंदेवाः तस्मिन्महिषे सामचदानंचसामदाने तथाभेदश्चदण्डश्चभेददण्डौ इतिनीतिविज्ञप्रतिपादितमुपाय चतुष्टयमपि प्रयोक्तुं नसमर्थाः उभयोर्नकारयोरुभाभ्यां पदाभ्यां संबंधः कुतोन समर्था इत्यतस्तस्मिन्हेतुगर्भितविशेषण चतुष्टयं योजयति कीदृशे महिषे तम इति तमोगुणोऽधिकः उत्कृष्टो यस्मिन् अतः साम न युज्यते यतो वयं सत्वगुण प्रधानाः तेजस्तिमिरयोरिव सत्वतमसोर्मिथो नैसर्गिकविरोधात् पुनः कीदृशे सर्वाभिः समृद्धिभिः राजविभूतिभिर्जुष्टे सेविते अतोदानं न युज्यते दानंहिनिधनेदत्तं सफलंभवति पुनःकीदृशे स्वस्यात्मनो निघ्नाः अधीनाबंधवो भ्रात्रादयः अमात्यादयोवा यस्य तस्मिन् अतोभेदो नयुक्तःभेदोहिप्रतिकूलवधुं प्रति युज्यते अविचिंत्यं तर्कागोचरंवीर्यं पराक्रमोयस्य तस्मिन् अतोदण्डो नयुक्तः दण्डोहि स्वस्मादूनवीर्ये कार्यंचमो भवतीतिभावः सामनाम प्रियवचनादिना शत्रोः क्रोधोपशमनं तत्तु पंचधा तथोक्तम् परस्परोपकाराणां दर्शनं गुणकीर्तनम् संबंधस्यसमाख्यान मायत्याः संप्रकाशनम् वाचापेशलया साधुतवाहमितिचार्पणम् इतिसामविधानज्ञैः सामपंचविधंस्मृतमिति दानंनाम स्वरक्षायै शत्रोर्वशीकरणायवा परेभ्यः स्वधनस्यसमर्पणम् भेदोनाम शत्रोरमात्यादीनामुपाये न परतोबिश्लिष्यात्मसात्करणं दण्डोनाम युद्धेशत्रोः स्वप्रभावदर्शनं सामदानेभेददण्डावित्युपायचतुष्टयमित्यमरः अधीनोनिघ्नआयत्तइतिच ॥ ६ ॥

धिक् पौरुषं येन पुरंदरोऽपि परैः पराजित्य परां विपत्तिम् ।
अनायि तन्निश्चिनुमो वयं ते विधे नितांतं परवान् हि

लोकः ॥ ७ ॥

अथ पौरुषान्निर्विंसाद्दैवं प्रतिपादयंति "धिगिति" पौरुषं पुरुषार्थं धिक् धिक्कारोस्तु येनपुरंदरोपि परपुरदारकतयाप्रसिद्धोपींद्रः परैः शत्रुभिः पराजित्य परामुत्कृष्टां विपत्तिं अनापि नीतः पुनरन्यस्य पौरुषे कोहंकारइति भावः तत्तस्माद्धेतोः तेवयंदेवाः इतिनिश्चिनुमः निश्चयंकुर्मः इतिकिं अयंलोकोजनः नितातं निरंतरं विधेर्दैवस्यपरवान् अधीनोस्ति पौरुषेकृते पिफलसिद्धेरभावादकृते च क्वचित्फलसिद्धिदर्शनादित्यन्वयव्यतिरेकाभावात् दैवस्यैवमुख्यतेतिभावः पौरुषमितिधिग्योगेद्वितीया पुरोरिपूणांदारयतीति पुरंदरः पूःसर्वयोर्दारिसहोरितिखच् अनायीतिभावकर्मणिलनोरूपं नयतेर्द्वि कर्मकत्वात्कर्मद्वयं परतंत्रः पराधीनः परवान्नाथवानपीत्यमरः लोकस्तु भुवने जने इति च ॥ ७ ॥

अतो विधे नः शरणं विधेयं स एव सर्वस्य हि भागधेयम् ।
रजःप्रधानः स जगन्निदानं तुष्टश्च दास्यत्यभयप्रदानम् ८ ॥

इदानींश्लेषेणविधिशब्दं दैववाचकं ब्रह्मण्यपिनिहितं मत्वातदाश्रयणमेव हितमितिप्रतिपादयंति "अतइति" अतोऽस्मात्कारणात् नोऽस्माकंविधेर्ब्रह्मणए वशरणं विधेयं कार्यं हियतः स एव ब्रह्मा सर्वस्य जनस्यभागधेयं प्राक्तनकर्मानुसारेणशुभाशुभफलदत्वाद्दैवरूप इत्यर्थः किंच स एव रजः प्रधानः रजोरूपयाविक्षेपशक्त्यो पहितः सन् जगतो निदानं कारणं भवति स एव हितुष्टः अस्मान् अभयस्य प्रधानं दास्यति भाग्यैकदेशयोर्भाग इति रुद्रः भाग्य एव भागधेयं भागरूपनामभ्योधेयइति भागधेयस्यचाजहल्लिंगत्वात्पुल्लिंग विशेष

त्वेपिनपुंस्त्वं स्व' निदानसर्गापि। विधिर्ब्रह्मविधानयोः विधिवाक्ये च दैवे च प्रकारे कालकल्पयोरितिहैमः विच्चेपशक्तोर्जगन्निदानत्वंचोक्तम् विच्चेपशक्तिर्लिंगादि ब्रह्माण्डांतं जगत्सृजेदिति। जायोपजातिः ॥ ८ ॥

ततोऽचलीकृत्य मतिं सुरौघा श्चिंतार्णवं चारुमिथो मथित्वा।
तदापुरेवाऽमृतमर्थ मेतं शोकापनोदाय विनिश्चकर्षं ९ ॥

"तत इति" ततोऽनंतरं सुरौघाः देवसमूहाः तदा पुरासिंधु मंथन कालेऽमृतमिव एतमर्थंविद्याश्रयणरूपं शोकस्यापनोदाय नाशार्थंविनिश्चकर्षं उद्धृा किंकृत्वा मतिंबुद्धिमचलीकृत्यनिश्चलीकृत्य पर्वती कृत्य च तथा चिंतारूपमर्णवं समुद्रं मिथो मथित्वा विलोड्य अनचलामचलां कृत्वा इत्य चली कृतत्र अभूततद्भावेच्विः च्वौदीर्घः मथिधातोः पूर्वकालेक्त्वा आगमशास्त्रस्यानित्यत्वान्नुमभावः शोकापनोदायेतितादर्थ्ये चतुर्थी अत्रमतेरचलरूपत्वाच्चिंतायाश्चार्णवरूपत्वाच्चरूपकालंकारः इंसी उपजातिः ॥ ९ ॥

ततो मुहूर्ते जयदेवसंज्ञे जयाय देवानदिश प्रयातुम्।
प्रास्थानिकं स्वस्त्ययनं नियुज्य प्रस्थापयामास गुरुः
सुराणाम् ॥ १० ॥

अथ ब्रह्मलोकं प्रतस्थुरितयाह "तत इति" ततोनिश्चयानंतरं सुराणां गुरुर्बृहस्पतिः जयदेवसंज्ञे मुहूर्ते तान्देवान् जयार्थं प्रयातुमाज्ञप्तवान् जयो-देवानांयस्मिन्नितयर्थादेवमुहूर्तस्यदेवजयसूचकतेति अथचप्रस्थानसमययोग्यं स्वस्त्ययनं नियुज्यतान् प्रस्थापयामास। मालोपजातिः ॥ १० ॥

ययासतां तत्र सदक्षणानां ववौ मरुन्मंद मथाऽनुकूलः।

अथाकिरंस्ते सुमनःसमूहं शाखा विशाखा सुमनः
शिरस्सु ॥ ११ ॥

अथशुभशकुनानिकार्यसिद्धिसूचकान्याह "यियासतामिति" तत्र तस्मिन्समये यातुमिच्छतांदेवगणानां अनुकूलो वायुर्मंदंमंदं यथास्यात्तथा ववौ अथचतेतरवः विशालाश्शाखाः देवानांशिरस्सु पुष्पसमूहमवाकिरन् याधातोरिच्छार्थे सः प्रत्ययः ततोद्वित्वं इस्से इतीकारः शोभनं मनोयेषामिति सुमनः पदेनापिशुभदत्वंद्योतितं तथा च श्रीपतिः निमित्तराशिरेकतो नृणांमनस्तथैकतः अतो यियासतां सदा मनोविशुद्धिरिष्यतइति अनुकूलवायोरपिशुभदत्वं चोक्तं अनुकूलोयदावायुः सर्वकार्याणि साधयेदिति तथापुष्पणामपि मरुद्देवेसमीरिना इति मेदिनी सुमनाः पुष्पमालयोः स्त्रियांनाधीरदेवयोरितिच अनोकुहः कुटः शालः पलाशी द्रु द्रुमागमा इत्यमरः ॥ ११ ॥

प्रदक्षिणीकृत्य मृगा विहंगा ययुः स्वनंति स्म च कीचकौघाः ।
दृशां सहस्रार्धमथो मघोनः पुस्फोर सव्येतर
मेककालम् ॥ १२ ॥

अन्यान्यपिशुभनिमित्तान्याह "प्रदक्षिणीकृत्येति" मृगाः पक्षिणस्तान् प्रदक्षिणीकृत्यययुः कीचकानां वेणूनामोघाः समूहाश्च स्वनंतिस्म शब्दंचक्रुः अथोमघोनः इंद्रस्यदृशां सहस्रार्धं पंचशतमितं सव्याद्वामादितरं दक्षिणमित्यर्थः एककालंयुगपत् पुस्फोरस्फुरितवान् पुंसांदक्षिणनेत्रस्फुरणं शुभफलदं इंद्रस्य तु सहस्रनेत्रत्वात्पंचशतनेत्रस्फुरणमुक्तं मृगपक्षिणोप्रदक्षिणीकृतस्यगमनंशुभफलमुक्तं प्रदक्षिणगताः श्रेष्ठा यात्रायां मृगपक्षिणइति कीचकावेणवस्ते सुर्येस्वनंत्यनिलोद्धतइत्यमरः अत्रापि कीचकपदस्यवेणुमात्रवाचकतेव ॥ १२ ॥

इत्थं निमित्तान्यमितानि मत्वा फलस्य सिद्धेः सुमनीभवन्ति।
मुदाऽभि धातुः सदनं प्रयातुं मनो दधुर्दानववैरिवाराः॥ १३॥

"इत्थमिति" इत्थममुनाप्रकारेण दानववैरिणां देवानांवाराः समूहाः अमितानिबहूनि निमित्तानिशकुनानि फलस्यसिद्धेः सुमनीभवंति पुष्पीभवन्ति मत्वाज्ञात्वा पुष्पानंतरंफलोद्गमोभवतीतिभावः मुदाप्रीतया धातुर्ब्रह्मणः सदनं लोकं अभि प्रति प्रयातुं मनोदधुः चौसलोपश्चेतिसुमनसः सकारस्यलोपः अभिरभागेइतिकर्मप्रवचनीयत्वेन तद्योगेसदनमितिद्वितीया वारसंघातसंचया इत्यमरः॥ १३॥

विहायसा तेऽथ पथा तदानीं समुत्पतंतिस्म महीं विहाय।
अदभ्रचन्द्रैरिव संवृतं तैर्दूरंगतैः खञ्छ्रियमापदभ्रम् १४॥

"विहायसेति" अथतेदेवाः तदानीं पृथ्वींत्यक्त्वा आकाशेन मार्गेण समुत्पतंतिस्म तैश्च दूरंगतैः संवृतं व्याप्तं अभ्रंव्योम अदभ्रैर्बहुभिश्चन्द्रैरिवव्याप्तंसच्छ्रियं परमशोभामापत् अभूतोपमेयं पुंस्याकाशविहायसी इत्यमरः अदभ्रं बहुलंबहुलमितिच॥ १४॥

तैर्द्रागऽतिक्रम्यबहूनि धिष्ण्यान्यऽधिष्ठितानीन्दुविकर्त्तनाद्यैः
अकारि दृक्प्राघुणिकः स्तृषार्तैर्हृदो हिदंतैरिव
सत्यलोकः॥ १५॥

"तैरिति" तैर्देवैः द्राक्शीघ्रं चन्द्रसूर्यादिभिरधिष्ठितानि बहूनिभुवनानि उलंघ्यसत्यलोकः ब्रह्मलोकः दृशोरतिथिरकारि दृग्गोचरीकृत इतियावत्

कैः काइवतृषार्त्तैर्गजेन्द्रैर्हद इव अत्रतृषारूपं दुःखं तदार्तंगजरूपादेवा स्तच्छमन कार इदरूपो ब्रह्मलोक इतिज्ञात्वा पूर्णोपमेयं विकत्तं मार्क्रंमार्तं डाइतप्रमरः ॥ १५ ॥

दूरान्महोमण्डल मीक्षमाणा विभक्तवर्णं च ततः कथंचित्।
उच्चावचापस्त्रचयैः पुनस्तं लोकं विधातु र्य
विलोकयंति ॥ १६ ॥

"दूरादिति" तेदेवातंलोकं दूरात् तेज पुञ्जमेव पश्यंतः ततश्चासन्नं कथं चित् महतायत्नेन विभिन्नरूपं पश्यंतः ततश्चात्यासन्नं पृथग्दृश्यमाने र्वहुविध मंदिरसमूहैः ब्रह्मणो लोकंविलोकयंतिस्म अयमेवब्रह्मलोक इतिनिश्चयंप्रापु रितपर्थः विलोकयंतिस्मे तिस्मयोगेभूतार्थता उच्चातचंनैकभेद मित्यमरः निमां तापस्त्यसदनंभवनागारमन्दिरमितिच ॥ १६ ॥

निजप्रभामंडलमध्यगानि वेश्मानि यस्मिन्मणिनिर्मितानि।
किर्मीरिताभिः परितो विभाति पताकाभिरलं
कृतानि ॥ १७ ॥

संप्रति ब्रह्मलोकं वर्णयति "निजेति" यस्मिन् लोके वेश्मानि गृहाणि विभा ति कीदृशानि स्वस्वगृहस्यै वयत्प्रभामंडलं तन्मध्ये प्राप्तानि तथामणिभिः रचिता नि तथाचित्रताभिः पताकाभिर्ध्वजैः परितोऽलंकृतानि किर्मीराश्चित्राणि जा तानि यासुताभिः चित्रं किर्मीरेत्यमरः ॥ १७ ॥

मनोनुरूपं क्षणमाचलभ्यं चिरानुवंधि प्रतिवंधहीनम्
दिवौकसामीश्वरतामुपेत्य पुरौकसो यत्रसुखं भजंते ॥ १८ ॥

"मनइति" यत्रयस्मिन् लोके दिवौकसांदेवानामीश्वरतामाधिपत्यं प्राप्यपुरवासिनः सुखंसेवंते ननुसुखमपिबहुधेतिकीदृशं सुखंसेवंतइत्यतआह मनोनुरूपमिति यदात्मनसावांछितं तत्तदेवसुखं प्राप्नुवंतितिभावः ननुमनोनुरूपमपि किं कालांतरेण प्राप्नुवंति नेत्याह क्षणमात्रलभ्यमिति यत्क्षणेवांछितं तत्क्षणएवप्राप्नुवंतीति किंतत्क्षणलभ्यमपि सद्यो नश्यति नेत्याह चिरानुबंधीति चिरस्थायीत्यर्थः किंचिरस्थाय्यपि विघ्नैःपरिभूयते नेत्याह प्रतिबंधहीनमिति विघ्नरहितं दिवं स्वर्गलोकोगृहंयेषां ते दिवौकसः दिवशब्दोऽदंतोपि यक्रभवनं स्वंदिवं नभइतित्रिकांडशेषात् ॥ १८ ॥

सरोऽस्ति नो यत्र न यत्र कञ्जं कञ्जं न गुंजंत्यलयो न यत्र
न गुञ्जितं कर्षति यत्र चित्तं चित्तं न यद्ब्रह्मविचारशून्यम् १९

"सरइति" यत्रलोके तादृशं सरोनास्ति यस्मिन्कंजंकमलंन जातावेकवचनंयद्यत् सरस्तत्तत्कमलमेवेत्यर्थः तथायत्रतादृशं कंजमपि न यस्मिन् अलयोभ्रमरा नगुंजंति सर्वमपि कमलजातं सभ्रमरगुंजितमिति तथातादृशंभ्रमरगुंजितमपिन यत्चित्तं नकर्षति सर्वमपिगुंजितंचित्तकर्षणशालीति तथातादृशं चित्तमपिन यद्ब्रह्मणः परमात्मनोविचारेण शून्यंस्यात् सर्वोपि चित्ते तत्त्वब्रह्मविचारंकरोतीतिभावः एकावल्यलंकारोयम् ॥ १९ ॥

उरुद्युतेः पार्श्वमुपेत्य तस्य न शक्नुवंति स्म विलोकितुं ते।
मुहुः स्खलंतीभिरथ स्वदृग्भिस्तदा निनिंन्दु र्ह्रऽनिमेषभावम्
॥ २० ॥

"उरुद्युतेरिति" तेदेवाः तस्यमहाप्रभस्य ब्रह्मलोकस्यसमीपं प्राप्य तंद्रष्टुंनसमर्था बभूवन् यद्यचमुहुर्वारंवारं तस्यमहाप्रभत्वात् ततः सकाशात् स्खलं

तोभिः पक्ष्मिरतां प्राप्नुवन्तीभिः स्वदृग्भिः करणैः स्वस्मिन् गुणरूपमपि अनिमे
षभावं तदा निनिन्दुः अयंभावः यदस्मास्वपिनिमेषोभवेत् तदावयमप्यनिमी
लितेक्षणाः स्यामेति अत्रमहाद्भुतिमंतंलोकंद्रष्टुमशक्तानांदेवानांनिमीलन
परिपंथित्वात् गुणस्याप्यनिमेषत्वस्यदोषरूपवर्णनादुल्लासालंकारोयम् ॥ २० ॥

**गुरोर्गिरा ते तमसः परस्तात्तद्ब्रह्मधाम प्रतिपद्य सत्यम्**
**विहाय भीतिं महिषाधिपोत्थां सिषेविरे शं वचसाम**
**गम्यम् ॥ २१ ॥**

अथैषां ब्रह्मलोकप्राप्तिमाह "गुरोरिति" तेदेवाः गुरोर्बृहस्पतेर्गिरा वाण्या
उपदेशेनेतियावत् तत् पूर्वोक्तं सत्यं सत्याभिधं तमसोंधकारात् परस्तात् तेजो
रूपमितरर्थः ब्रह्मणोधाम भवनं प्रतिपद्य प्राप्य वचसामगम्यं निरतिशयं शं सुखं
सिषेविरेभेजिरे किं कृत्वा महिषोयोसावधिपः अधीशः महिषाणामधिपो वा
महामहिषत्वात् तस्मादुत्थांजातां भीतिं विहायत्यक्त्वा अथाप्रस्तुतार्थः तेजिज्ञा
सवः गुरोर्देशिकस्यगिराउपदेशेन तदिति तत्पदलक्ष्याखंडचैतन्यात्मकं ब्रह्म
प्रतिपद्य वेदान्त युक्तिभिर्निश्चित्य महिषस्याधिपः स्वामीकालः तदुत्थांभीतिं
विहाय कालभयंत्यक्त्वा वचसाकथितुमशक्यं निरतिशयं शं सिषेविरे कीदृशन्तद्ब्र
ह्म तमसोऽज्ञानात्परस्तात् पुनःकीदृशंधामतेजोरूपं पुनश्च सत्यं त्रिकालावाध्य
यद्वावचसामगम्यमित्यपि ब्रह्मविशेषणं अत्रैवयथाक्रमंश्रुतयः प्रमाणं परीक्ष्यलो
कान्कर्मचितान्ब्राह्मणोनिर्वेदमायान्नास्त्यकृतः कृतेन तद्विज्ञानार्थंसगुरुमेवा
भिगच्छेत् समित्पाणिः श्रोत्रियंब्रह्मनिष्ठमिति अकृतोमोक्षः कृतेनकर्मणा न
भवतीत्यर्थः आदित्यवर्णं तमसः परस्तादितिच सत्यंज्ञानमनंतंब्रह्मेतिच यतो
वाचोनिवर्त्तंते अप्राप्य मनसा सहेतिच गुरुर्महत्यांगिरसेपित्रादौधर्मदेशके इति
हैमः तमांसित्रिगुणतिमिरसैंहिकेया इतित्रिकांडशेषः ब्रह्मतत्वतपोवेदे नद्वयोः
पुंसिवेधसीतिधरणिः धामशक्तौप्रभावेचतेजोमंदिरवारिष्विति विश्वः अत्रदेवा
नां ब्रह्मलोकप्राप्तिवर्णने प्रकृते जिज्ञासोश्च परमपद प्राप्तिवर्णनस्याप्रकृतस्या

दुर्वादिपदानां नानार्थत्वाच्च प्रकृताऽप्रकृतश्लेषालंकारः तथोक्तं चन्द्रालोके नानार्थसंश्रयः श्लेषो वर्ण्यावर्ण्योभयाश्रित इति ॥ २१ ॥

**पूर्द्वारि मुक्तामणिनिर्मितायां क्षणं चिचिंतुः प्रतिबिंबितांगाः**
**भीता हयारेः किमिहान्यतो न्यब्रह्मांडदेवाः शरणं प्रपन्नाः**
**॥ २२ ॥**

अथैषांपुरद्वारप्राप्तिमाह "पूर्द्वारीति" तेदेवाः मुक्ताभिर्मणिभिश्च रचितायां तस्यापुरोद्वारि प्रतिबिंबितांगाः संतः प्रतिबिंबिरूपान् स्वसदृशाकृतीनऽपरांस्तत्र वीक्ष्येत्यर्थः तत्रस्थिताः क्षणमात्रं तर्कयामासुः किमित्याह किमितितर्के इह ब्रह्मलोके अन्यस्मान्महिषासुरान् भीतः अन्यस्यब्रह्मांडस्यदेवाः वयमिवब्रह्माणं शरणं प्राप्ताः हयारेरितिभयहेतौपंचमी अत्रसंशयालंकारः ॥ २२ ॥

Indira Gandhi National
Centre for the Arts

**ततस्ततायां शतभानुभायां विभ्राजमानं ससुखं सभायाम् ।**
**विचित्रचामीकरनिर्मितायां वैडूर्य्यगारुत्मतमण्डिता**
**याम् ॥ २३ ॥**

अथ देवैर्दृष्टं ब्रह्माणंविशिनष्टि ततइत्यादिभिः षड्भिः ततइत्यस्यषट्प द्योत्तरार्धेनान्वयः ततो लोकदर्शनानंतरं देवानांवाराः समूहाः हिरण्यगर्भंब्रह्माणं पुरस्तादग्रतो ददृशुः कंकेइव हिरण्यं स्वर्णं गर्भेयस्यतं निधिंदरिद्रानिर्धना इवकीदृशंतं ससुखं यथास्यात्तथा सभायां प्रकाशमानं कीदृश्यां सभायां ततायां विस्तृतायां तथाशतसूर्यतुल्यप्रभायां तथाअनेकविधैः स्वर्णैरचितायां तथावैडूर्यैर्गारुत्मतै श्च मणिविशेषैर्भूषितायां चामीकरं जातरूपं महारजतकांचने इत्यमरः ॥ २३ ॥

विनिर्मिते स्वर्णमणिप्रवेकैः सिंहासने प्रोच्चतरे निषण्णम् ।
उदेत्य साना विव रत्नसानो रुपस्थितं माणवकोष्णरश्मिम् २४

पुनः कीदृशमित्याह "विनिर्मितइति" स्वर्णमणिप्रवरैरचिते अतिशयेनो च्चे सिंहासनेस्थितं कस्मिन् कमिव रत्नानिसानौयस्य तस्यसुमेरोःसानौशिखरे उदयंप्राप्यउपस्थितं माणवकंबालं उष्णरश्मिं सूर्यमिव क्लीवेप्रधानंप्रमुखप्रवेकानुत्तमोत्तमाः मुख्यवर्यवरेण्याश्चेत्यमरः बालस्तुस्यान्माणवकइतिच गभस्तिहस्तिरश्मयः भानुः करोमरीचिः स्त्रीतिच अत्रस्वर्णमणिरचितोच्चतरसिंहासनस्य मेरुसासाम्यं ब्रह्मणो रक्तत्वादुदितसूर्येणेतिकृत्वा पूर्णोपमेयम् ॥ २४ ॥

संस्तूयमानं स्तवकैः स्तवानां सुगुम्फिते र्नारदपर्वताद्यैः ।
गीतेऽपितश्रोत्र मथ प्रणीते र्गंधर्ववारै-रितसामसारैः २५॥

पुनः कीदृशमित्याह "संस्तूयमानमिति" नारदपर्वतादिभिः सुरमुनिभिर्ग्रथितैः स्तोत्राणांगुच्छैः संस्तूयमानं अथचगंधर्वसमूहैर्गीयमाने गीते दत्तकर्णं कीदृशैः प्राप्तसामवेदसारैः सामवेदोहिसंगीतप्रायः । स्याद्गुच्छकस्तुस्तबक इत्यमरः ॥ २५ ॥

आस्यै श्चतुर्दिक्षु चतुर्भि रस्मादर्थीनकोप्येत्विति वीक्षमाणम्
दोर्भि श्चतुर्वेदधरै श्चतुर्भिः सृजंत मुच्चै श्चतुरोपि वर्गान् २६॥

पुनः कीदृशमित्याह "आस्यैरिति" चतुर्भिर्मुखैश्चतसृषु दिशासु इतीव यश्यंतमित्यत्राध्याहार्या इतिकिं अस्मात् लोकात् कोप्यागतोजनोनिरर्थकोनगच्छतु सर्वोपिसार्थएवयात्विभावः तथाचतुर्वेदधरैश्चतुर्भिर्भुजैः उच्चैर्यथा

स्यात्तथा चतुरोपिधर्मार्थकाममोक्षाख्यान् वर्गान् स्वभक्तं ददतं । भुजवाहप्रवे ष्टोदो रित्यमरः ॥ २६ ॥

शोणांगशोभं शरदिन्दुकांत्या गिरा परीरंभितवामभागम्
कार्त्तस्वरं मंजुलयेव मण्या बल्लग्रे व शालं नलिनं नलिन्या २७

पुनः कीदृशमित्याह "शोणेति" रक्तांगप्रभं तथा शरच्चन्द्रशोभया सरस्वत्या चालिंगितवामपार्श्वं कयाकमिव सुन्दरयामण्या स्वर्णमिव तथालतयाहृच्चमिव तथाकुमुदिन्या कमलमिव उपमानसमुच्चयोपमेयम् ॥ २७ ॥

सदा शरण्यं शरणागतानां शोकद्रुमारण्यहिरण्यवीर्यम् ।
हिरण्यगर्भं ददृशुः पुरस्ता न्निधिं दरिद्रा इव देववाराः २८
इतिषड्भिः कुलकम् ॥

पुनः कीदृशमित्याह "सदेत्याद्यर्धेन" शरणं प्राप्तानां जनानां सदाशरण्यं शरणेसाधुं तथाशोकाएवद्रुमास्तेषां यदरण्यंवनं तद्दग्धुं हिरण्यवीर्यं दहनमिव हिरण्यं स्वर्णंवीर्यंरेतोस्येति हिरण्यरेताहुतभुग्दहनो हव्यवाहन इत्यमरः ॥ २८ ॥

अथो विधातुर्युगपत्सुरौघा साष्टाङ्गपातं प्रणिपेतुरंघ्रौ ।
इयद्विधैवं वत पातिताः स्म इतीवविज्ञापयितुं विरंचिम्
॥ २९ ॥

"अथोइति" अथदर्शनानंतरं देवसंघाः ब्रह्मणः पादे साष्टांगपातंयथास्यात्तथा युगपदेकदेवप्रणिपेतुः अत्रोत्प्रेक्षते किंकर्त्तुमिव ब्रह्माणमितिविज्ञापयितुं

मिव इतिकिं वयंदेवाः वत्सखेदे मह्विषेणक्षत्वा एवममुनाप्रकारेणयथा ऽ त्व पतितास्त्वया पातिताः स्मः। अष्टांगप्रणामस्तूक्तः पद्भ्यां कराभ्यां जानुभ्यामुरसा शिरसा दृशा मनसा वचसा चैवप्रमाणामोष्टांगईरित इति युगपदेकदेत्यव्यय वर्गे अमरः ॥ २९ ॥

स्पृहामहे त्वोपचितिं पुन स्ते क्षिप्रं समुत्तस्थु रितीव देवाः।
बद्ध्वांऽजली नर्थवतीं विधातुःस्तु तिं प्रसादाय समारभन्त ३० ॥

अथोत्तस्थुरित्यप्युत्प्रेक्षयाह "स्पृहेति" तेदेवाः पुनर्निपातानन्तरं इतीव क्षी घ्रं समुत्तस्थुः उत्थितवंतः इतिकिं हेधातः पुनरपिवयं स्वयात्मनउपचितिं वृद्धिं स्पृहामहेवांच्छामः यथाऽत्रपतितास्त्वा पुन स्त्थिता इतिभावः अत्रपतनो त्थानाभ्यामेवतैः स्वदुःखं प्रयोजनंच दर्शितमितिसूचितम् अथच अंजलीन् बद्ध्वा ब्रह्मणः प्रसादार्थं अर्थवतींस्तुतिं सम्यक् आरभंत तौयुतावंजलिः पुमा- नित्यमरः ॥ ३० ॥

अयोनिज स्त्वं खलु विश्वयोनि र्योनित्य मानंदयुरेव स त्वम्।
सर्वेषु भूतेषु विभुः स्वयंभूः शंभुः स्वभू र्वा भवतो न चान्यो ३१

स्तुतिमाह "अयोनिजइति" खल्विति प्रसिद्धमेतत् हेधातः त्वमस्यविश्वस्य योनिः कारणमसि नतुमेपिकारणमस्तिमवेत्यत्रआह तुं तुअयोनिजः कारणांत रविहीनः तवापिकारणांतरकल्पने अनवस्थादोष प्रसंगात् अथकुतइत्यतआहः यः परमात्मानित्यमानन्दयुः आनन्दोह्ययंब्रह्मेति श्रुतिभिर्गीयते सत्वमेवासि तथा सर्वेषुपृथिव्यादिषु पंचमहाभूतेषु विभुर्व्यापको ऽसि तथास्वयमेवभवती तिस्वयंभूः त्वमसि नन्वीदृशोशंभुविष्णू किंनस्तइत्यतआहः शंभुः शिवः स्व

भूर्विष्णुर्वाभवतस्त्वत्तः अन्योऽतिरिक्तोनस्तः तद्रूपाविवेतयर्थः योनिर्द्दयोरा करेसया त्वाकरेस्त्रमन्दिर इतिविश्वः सयादानंदमुरानन्द इत्यमरः ॥ ३१ ॥

उज्जृम्भते त्वत्त इदं हि सर्वं त्वेमान मासाद्य तत त्वकास्ति विलीयते त्व य्यथ विश्वनाथ स्फुलिंगसंघात इवाग्निमध्ये ३२

"उज्जृंभतइति" हे विश्वनाथजगदीश इदंसर्वं नामरूपात्मकं जगत् त्वत्त एव उज्जृभते उदयंप्राप्नोति जायतइतियावत् ततउत्पत्त्यनंतरंच त्वत्तएवत्वे मानंस्थितिमासाद्य प्राप्यचकास्ति शोभते स्वस्वव्यवहारंकर्त्तुंचमत इत्यर्थः अथचमहा प्रलये सति त्वय्येवविलीयते लयंप्रयाति कस्मिन्कइव अग्निमध्ये स्फुलिंगानामग्निकणानांसंघातः समूहइव यथास्फुलिंगाअग्नित एव प्रादुर्भ वन्ति अग्नावेव तिष्टन्ति तस्मिन्नेव लीयंते तद्वदित्यर्थः यतोवाइमानिभूतानिजा यंते येन जातानिजीवंति यत्प्रयंत्यभिसंविशंतीतिश्रुतेः त्रिषुस्फुलिंगोग्निकण इत्यमरः ॥ ३२ ॥

अनुत्तम स्त्वं तमसः परस्तात् सदा सदभ्यासजुषां पुरस्तात्
विराजसि त्वं सकलोपरिष्टा त्वाता सि निष्टा न्निखिला
नधस्तात् ॥ ३३ ॥

तटस्थलक्षणमुक्त्वासंप्रतिस्वरूपलक्षणमाह: "अनुत्तमइति" हेधातस्त्वं अनु त्तमोसि नास्ति उत्तमः उत्कृष्टः कोऽपियस्मात् तथा तमसोऽज्ञानात् परस्तात् परोऽसि नन्वेतादृशस्त्वं तर्हिकथंलभ्यइत्याह सदभ्यासं जुषंते सेवंते योगाभ्यासनि रताइत्यर्थः तेषांसदेवपुरस्तादग्रेऽसि तेर्हृदियाह्योसीत्यर्थः तथात्वं सकलानां दे वादीनां लोकानां वा उपरिष्टात् उपरि विराजसे एवंभूतोपिजनान् नोपेचसइ

त्वाहुः अधस्ताद्भुवनेषुनिष्टान् स्थितान् सकलानस्मदादीन् जनान् पातासि रक्षितासि परस्तादित्यादयो निपातास्माधवः ॥ ३३ ॥

**सहस्रपत्रानन मुज्ज्वलंत्वा मरालगं भोगिपतिं श्रुतिज्ञम्।**
**क्षमाधरं गूढपदं ह्यनंतं प्राहुर्मुनीन्द्रा जगतो ऽस्य शेषम् ३४**

"सहस्रेति" हेब्रह्मन् त्वात्वां मुनींद्राः अस्यजगतः शेषमाहुः शेषंति महाप्रलयेपिसत्वात् कीदृशंत्वां सहस्रपत्रंकमलं तद्वदाननंमुखंयस्य तथा उज्ज्वलंप्रकाशमानं तथामरालेनहंसेनगच्छतिइति सतं हंसवाहनमिति तथाभोगःशरीरंविद्यतेयेषांतेषांशरीरिणांपतिंस्वामिनं प्रजापतित्वात् तथाश्रुतिज्ञं वेदतत्त्वार्थविदमित्यर्थः तथाक्षमांक्षांतिंपृथ्वीं वा धरतीतितं तथागूढं पदंस्थानं यस्य तं तथा हीतिनिश्चये अनंतं अंतस्त्रिविधपरिच्छेदस्तेनशून्यमित्यर्थः तथोक्तं नव्यापित्वाद्देशतोऽतो नित्यत्वान्नापिकालतः नवस्तुतोपिसार्वात्म्यादानंत्यं ब्रह्मणिस्त्रिधेति अथ द्वितीयोऽर्थः तत्रत्वामिति च्छेदः मुनींद्राः त्वांअस्यजगतः शेषनागंप्राहुः सर्वाधारभूतत्वात् कीदृशंशेषं सहस्रसंख्याकानि पत्रवदाननानि यस्य तं तथाउज्ज्वलं विशदं तथाअरालंकुटिलंगच्छतीति तं जिह्मगत्वात् तथाभोगः फणाविद्यते येषां तेषांसर्पाणांपतिं तथाश्रुतिज्ञमितितुल्यं यद्वाज्ञानदृशोरेकार्थकत्वात् ज्ञादृक् श्रुतिरूपे कर्णरूपे ज्ञे दृशौ यस्य चक्षुःश्रवस्त्वात् तथाक्षमांपृथ्वीं धरतीति तं तथागूढानि अदृश्यानिपदानिचरणानि यस्य तं तथाअनंताख्यं महत्वान्नविद्यते अंतोयस्येत्यर्थः । उज्ज्वलंचविकासिनि शृंगारे विशदे दीप्ते पीति हैमः भोगः सुखे धने पुंसि शरीरफणयोर्मत इतिच क्षितिक्षांत्योः क्षमेत्यमरः पदंव्यवसितत्राणस्थानलक्ष्मांघ्रिवस्तुष्वितिच अनंतः केशवे शेषे पुमान्निरवधौत्रिष्विति मेदनी अत्रप्रकृतश्लेषालंकारः ॥ ३४ ॥

**कारुण्यसर्पिर्महार्णंमम त्वं ना स्मासु कस्मात्प्रक्षिणोषि कामम्**
**संपालनीया अपि मंतुमंतः पुत्राहि पित्रे ति जनानुवादः ३५ ॥**

Centre for the Arts

इतिस्तुत्वातंप्रार्थयंति "कारुण्येति" हेब्रह्मन् कारुण्यं कृपैव सर्पिः घृतंतेन मसृणंस्निग्धं मनः अस्मासु दुःखितेषुदेवेषु कस्माद्धेतोःकामंस्वैरयथास्यात्तथा न प्रहिणोषि नप्रेरयसि अत्रलौकिकसंमतिमाहुःह्रियतःइतिजनानामनुवादःपरंप राप्रवादोस्ति इतिकिं मंतुमंतः अपराधिनोपिपुत्राः पित्रासंपालनीयाएवभवंती तिघृतमाज्यंहविःसर्पिरित्यमरः चिक्कणं मसृणं स्निग्धइतिच आगोऽपराधोमं तुश्चेतिच ॥ ३५ ॥

आकर्ण्य ताः कर्णपथा यथावत् सरस्वतःसारवती स्सुराणाम्
निजाशये ऽसौ करुणासमुद्रे ऽतिथीचकारार सुदारचेताः ३६।

"आकर्ण्येति" असौउदारचेताःब्रह्मादेवानांताःसरस्वतीःगिरःनदीश्च कर्ण योःपथामार्गेण यथावत् आकर्ण्य श्रुत्वा करुणायाः दयाया समुद्ररूपेनिजाशये स्वहृदि अत्मत्वर्थं अतिथोचकार विचारयामासेत्यर्थःकीदृशीःगिरःनदीश्च सार वतीःन्यायार्थवतीःजलवतीश्च श्लेषमूलकंरूपकालंकारोयं सरस्वतीसरिद्भिदि वाच्यापगायां चौरले गोवाग्देवतयो रपीतिहैमः सारो बले मज्जनिच स्थिरांशे न्याये च धनेचसारमितिविश्वः आशयः स्यादभिप्रायेमानसाधारयोरपीति मेदिनी ॥ ३६ ॥

बभाण भूयस्तिरयं स्तमिस्त्रं रदावलीनां घृणिभि र्घृणीताम्
द्युसत्ततिं चोपरतां विनद्य प्रोच्चै स्तडित्वानिव चातका
लिम् ॥ ३७ ॥

"बभाणेति" सः घृणी दयालुर्ब्रह्मा भूयः पुनः विनद्यइत्युक्त्वा उपरतांमू कीभूतां तांद्युसदांदेवानां ततिंपंक्तिं बभाणजगाद किंकुर्वन् दंतपंक्तीनां किर णैः तमिस्रंअंधकारं देवानां भयंवातिरस्कुर्वन्सन् कांकइव विनयोपरतांचात कपंक्तिं प्रोच्चैर्मेघइव तडित्वान्वारिदोंबुभृदित्यमरः ॥ ३७ ॥

मूकत्वभाक्षु त्रिषु चापरेषु गृणत्सदास्यं व्यलसत्तदेकम्
एकं चतुर्णां त्रिषु निद्रितेषु गुंजद्दिरेफं विकचं यथाऽब्जम् ३८

"मूकत्विति" तदा तस्मिन्काले अपरेषु त्रिषु मुखेषु मूकत्वं मौनं भजंतीति तथा तेषु सत्सु अथ च एकं तत्र ब्रह्मणः आस्यं गृणत् सत् व्यलसत् शुशुभे कथं यथा चतुर्णां कमलानां मध्ये त्रिषु निद्रितेषु मुद्रितेषु सत्सु एकं चतुर्थं अब्जं कमलं विकचं विकसितं सत् गुंजद्दिरेफं शब्दायमानभ्रमरं स्यात्तद्वदित्यर्थः अत्र निद्रितकमलत्रयेण मौनिशाल्वत्रयसाम्यं शब्दायमानभ्रमरेण विकचकमलेनैकेन च गृणदेकवक्त्रसाम्यम् ॥ ३८ ॥

स्वर्गौकसः स्वागतमस्तु यूयं निषीदताऽमीषु महासनेषु ।
निदेश मादाय ततो निविष्टाः स्पष्ट्वा स्मितेनेति पुनश्च पृष्टाः
॥ ३९ ॥

किंबभाषेत्याह "स्वर्गौकसइति" हे देवाः वः स्वागतमस्तु यूयमत्र अमीषु महासनेषु तिष्ठत ततश्चेति धातुराज्ञां गृहीत्वा स्थितास्ते देवाः धात्राईषद्धासेन कृत्वा पुनः पृष्टाः समनाक्स्मितमित्यमरः तदुक्तं ईषद्विकसितैर्दंतैः कटाक्षैः सौष्टवांचितं अलक्षितद्विजद्वारमुत्तमानां स्मितं भवेदिति ॥ ३९ ॥

कस्मादजस्रस्रवदस्रुजालं सहस्रमक्ष्णां द्युपतेरभीक्ष्णम् ।
प्रत्येकमप्यं हिमविन्दुभाजः सहस्रपत्रस्य विभां बिभर्ति ४० ॥

किं पृष्टाइत्याह "कस्मादिति" द्युपतेः इन्द्रस्य निरंतरं स्रवदंबुसमूहं नेत्राणां सहस्रं कस्मात् सहस्रपत्रस्य पद्मस्य शोभां दधाति कीदृशस्य पद्मस्य

अभीक्ष्णं निरन्तरं एकमेकं पत्रं प्रतितुषारविन्दुसेविनः कस्मादिन्द्रोरोदितीतिभावः अत्र सहस्रपत्रेण सहस्राक्षिसाम्यं तन्नतहिमविन्दुभिश्चनेत्राम्बुसाम्यं सहस्रपत्रं कमलमित्यमरः ॥ ४० ॥

प्रियंकरा न्वः खलु यायजूका न्कश्चिद्विनिघ्नंति न दन्दशूकाः
कच्चित्कुतर्कैर्भुवि वावदूकाः कुर्वंति वेदान्तविदो न मूकान् ४१

"प्रियंकराननिति" कच्चिदितिप्रश्नो वोयुष्माकं प्रियंकरान् यज्ञकरणशीलान् दुष्टाः न विनिघ्नंतियज्ञविघ्नं न कुर्वंतीत्यर्थः कच्चिच्च भुविपृथिव्यां वादकरणशीला नास्तिकाः कुत्सितैस्तर्कैं रनिष्टप्रसंगैः वेदांतशास्त्रज्ञान् मूकान् न कुर्वंति पुनः पुनर्भृशंवायजतेइतियायजूकः क्रियासमभिहारेइतियङ् यजजपदशांयङ इत्यूकप्रत्ययः दंदशूकइत्यत्र जपजभेत्यनुस्वारः कुर्वादिषुपाठाद्वदेरूकः इति वावदूकः दंदशूकस्तुपुल्लिंगो राक्षसे च सरीसृपे इति मेदिनी वावदूकोऽति वक्तरीत्यमरः ॥ ४१ ॥

SANS
891.21
G 05
Indira Gandhi National
Centre for the Arts

कच्चि त्तपस्यत्यऽधिरुह्य सानु नैन्द्रं पदं धर्षितु मिन्द्रशत्रः।
शतेष्टिभिः कश्चन यष्टुकामः करोति भूयः
शतमन्यु मन्युम् ॥ ४२ ॥

"कच्चिदिति" कश्चिदिंद्रस्यशत्रुर्दैत्यः इंद्रस्येदमैंद्रं पदंस्वर्गं धर्षितुं आक्रमितु गिरिशिखरमारुह्य तपो न करोति अथकश्चनभूयः शतसंख्याकाऽश्वमेधाख्ययज्ञैर्यजनंकर्तुमिच्छुः शतमन्योरिंद्रस्य मन्युं शोकंक्रोधंवा न करोति कच्चिद्विनिघ्नंतिनेत्यादौ काक्वैवार्थप्रतिपत्तिः तपस्यतीतिनामधातुःकरणेचेतियः प्रत्ययः ऐंद्रमिति तस्येदमित्यण् तुंकाममनसोरपीतियनिपरतुमोमलोपः इष्टिर्मताऽभिलाषेपिसंग्रहश्लोकयोः क्रतावितिहैमः मन्युर्दैन्येक्रतौक्रुधीति च ॥ ४२ ॥

IGNCA RAR
ACC No 2-552

इत्यादिवाग्भि र्विधिना ऽनुयुक्तो विचिंतयामाससदेवसंघ: ।
शर्मैव वाच्यं परिपृच्छतो ऽग्रे ना ऽलीकवाक्वापि

सदीरितव्या ॥ ४३ ॥

"इत्यादीति" इतिपूर्वोक्तादिभिः पृच्छावाग्भिः सदेवसंघः ब्रह्मणापृष्टः स्वचितेनेति विचिंतयामास इतिकिं परिपृच्छतः पुरुषस्याग्रेपृष्टैर्जनैः कल्याण मेववक्तव्यं अथ च सत्पुरुषैः असत्यवागपिनवक्तव्या अयंभावः यदिवयंस्वदु:खं ब्रूमः तर्हिपृष्टेनशर्मैववाच्यमितिशिष्टाचारविरोधः चेत्कल्याणंब्रूमः तर्हिमिथ्या वादीवक्तृतादोषः अनुपूर्वकयुजिधातोः पृच्छार्थः प्रश्नोनुयोगः पृच्छाचेत्यम रात् अलीकमप्रियेपिस्यादिव्येऽसत्ये नपुंसकमितिः मेदिनी ॥ ४३ ॥

इतिद्विधासंशयवृत्तिच्छित्त्यै सुखं च दुःखं क्रमतो निवब्रुः ।
शर्मैव धात र्भवदीक्षणे नः कुतिस्मरश्मा वुदिते तमिस्र ४४

"इतीति" इतिद्विविधसंशयवृत्तेश्छेदनाय क्रमेणसुखंदुःखं च ऊचुः कथमूचु रित्याह हेधातःतवदर्शनेसतिनोऽस्माकंकल्याणमेव यतः सूर्ये उदिते सति तमः क्वभवति कापि न कुत्रापीत्यर्थः अयंभावः त्वद्दर्शनेनैवास्माकंकल्याणंजातं परि शेषात्पूर्वंतु दुःखमेवासीदितिवुध्यते अतएवतुल्योयंदृष्टान्तः सूर्योदयात्प्राक् तमोभवति उदितेतु नष्टं भवति तद्वदित्यर्थः क्रमत इति सार्वविभक्तिकस्तसि रितितृतीयार्थे पंचम्यर्थेवातसि प्रत्ययः अर्थान्तरन्यासालंकारः ॥ ४४ ॥

जानासि सर्वं जगतां हृदिस्थं तथापि यत्पृच्छसि तत्कृपैव
ब्रूमो वयं तन्महिषो दुरात्मा सर्वां स्तृणीकृत्य दुनोति

सोऽस्मान् ॥ ४५ ॥

पूर्वस्मिन्पद्येगूढं स्वदुःखंनिवेदितं संप्रतिस्पष्टमाहुः "जानासीति" हेधातः स्वंजगतांहृदिगतं सर्वमेवजानासि यतोनास्मत्कथनापेक्षेतिध्वनिः तथापिसत्य पिसर्वज्ञत्वे यद्यस्माकं यद्दानं दृहसि तत्तस्मात् त्वत्कृपैवेति विघ्नः तत्तस्मा त्कारणादयंब्रूमः स्वाभिप्रायंनिवेदयामः किं कश्चिद्दितोनामदुष्टचित्तः दैत्यः य स्मान्सर्वान् वशीकृत्य तुच्छी कृत्य वर्तेऽधिदिनरिव यदा वशीकृतत्र घासीकृतत्र महिषस्स्ववासाखिलात् हृदिस्थमवसप्तम्याः काचित्कत्वादलुक् हिंसार्थवहिधा तोर्लटिद्विषेढीति ॥ ४५ ॥

यच्छिच्छिदा भिन्द्रकृता भिया सौ संस्मृत्य सामर्षतयाऽजनाद्रिः
रंभासुरात्प्राप्य जनिं स दंभीजंभद्विषे द्वेष्टि तुरंगवक्त्रः ४६ ॥

स्वयमेवतद्दुःखदानेहेतुं तर्कयन्ति "यच्छिदामिति" असौमहिषः पूर्वजन्म न्यंऽजनाद्रिरभूदितिविघ्नः तत्तु स्ववर्णाकृतित्वात् स च इंद्रेणकृतां पक्षाणांच्छिदां छेदनं संस्मृत्य अथ च अमर्षेणक्रोधेनसहवर्त्तमानः सामर्षः तस्यभावस्तत्ता तया ततोजातक्रोधेनेत्यर्थः रंभनाम्नोऽसुरात् जन्मप्राप्य सत्महिषोभूत्वा जंभद्वि षेइंद्राय द्वेष्टि द्वेषंकरोति क्रुधद्रुहेर्ष्यासूयार्थानांयंप्रतिकोपस्तत्रचतुर्थी तिजंभ द्विषेइत्यत्रद्वितीयार्थेचतुर्थी ॥ ४६ ॥

कुपय्यहयायेव हयारिरेषैर्द्यापराख्यं स हरिं दुनोति ।
नामाऽपि जागर्त्ति हि यत्र शत्रो स्तेजस्विनस्तं कतमे सहन्ते ॥ ४७ ॥

अत्रैवान्यत्तर्कयंति कुप्यन्निति "सहयस्यारि". महिषः हयायकुप्यन्निवह यापरपर्य्यायंहरिमिंद्रंदुनोतिदुःखाकरोति हियतः यत्रयस्मिन्नर्थे शत्रोर्नामापि जागर्ति प्रकाशते तं कतमेके तेजस्विनः सहंते न केपीत्यर्थः यमानिलेंद्रचंद्रार्कवि ष्णुसिंहांशुवाजिषु शुकाहिकपिभेकेषु हरिर्ना कपिले त्रिष्विति विश्वः ॥ ४७ ॥

अहो महोभिः प्रकरोति हीनं स सप्तसप्तिं हृदि जातमन्युः।
अमित्रमाश्रित्य हि वर्तमानमपीह मित्रं क उताद्रियंते ४८।

"अहोइति" आश्चर्यं समहिषः सप्तसप्तयोहयाः यस्यरेतितंसूर्यंमहोभिस्तेजोभि हीनं प्रकरोति अत्रहेतुः हृदिजातोमन्युः क्रोधोयस्य सच्छत्रुमाश्रितोयमिति क्रोधवीजं हियतः इहलोकेस्वशत्रुंआश्रित्य वर्तमानंमित्रंसुहृदमपिकोआद्रियं ते नकेपीत्यर्थः तथामित्रंसूर्यंमपीतिश्लेषेणप्रस्तुतेपियोज्यम् मित्रंसुहृदि नद्व योः सूर्येपुंसीतिमेदिनी ॥ ४८ ॥

हानिं स्वकीयामिव मन्यमानो दुनोति कालं महिषाधिरूढम्
स केवलं पुण्यजनेशितारं भात नं दुःखाकुरुते ऽनुकूलम् ४९ ॥

"हानिमिति" समहिषः कालंयमं महिषाधिरूढंवीक्ष्य स्वकीयां हानिमिव मन्यमानः दुनोति मत्सदृशोयमारूढोयमितिहानिः हेधातः समहिषः केवलं पुण्यजनानां रक्षसांईशितारंनैर्ऋतं न दुःखाकुरुते अत्रहेतुः अनुकूलमितिस्व सदृशप्रकृतित्वात् अथ च पुण्यंपवित्रंजनंसर्वोपिकांक्षते किं पुनस्तदीशमिति ध्वनिः दुःखात्प्रतिलोम्येइतिडाच्प्रत्ययः यातुधानः पुण्यजनोनैर्ऋतेयातुरक्ष सी इत्यमरः अथपुण्यजनो यक्षे राक्षसे सज्जनेपिचेति मेदिनी ॥ ४९ ॥

चक्रं हरेः कुण्ठितमस्य कंठेऽकिंचित्करं शाङ्करशूलमासीत्
उग्रं द्रुवज्राहतविग्रहोऽसौ वेलाहतेभस्य विभा वभार ॥ ५० ॥

ननुविष्ण्वादयस्तंकिं न जघ्नुरितयाहुः "चक्रमिति" अस्यमहिषस्यकंठेहरे र्विष्णोश्चक्रं सुदर्शनाख्यं कुंठितमासीत् प्रत्युत तदेवलग्नंसत्कुंठितमभूत्किंपुन र्निकृंतनवार्तेतिभावः तथाशंकरस्यशूलमपि अकिंचित्करमासीत् अस्यकंठेन

विं चित्कृतवदितगर्थः तथा असौ उग्रेणेंद्रवज्रेणआहतशरीरः वैत्रेणाहतसग्गज सग शोभां दधार यथावेत्राहतोगजोनकिंचिदुनोति तथासोपीतगर्थः शरीरंव र्षविग्रहइतगमरः अत्रेंद्रवज्रावृत्त समाप्तौ इंद्रवज्रेतिवृत्तनामापि सूचितम् उपजातीनामपितद्भेदत्वात्तत्रैव ॥ ५० ॥

स वरुणं करुणं क्षतवा न्रणे सधनदं च जिगाय धनंजयम्।
वसुगणं तृणकल्प मजीगणा द्भय मथो मरुतो मरुतोयवत् ५१

"सइति" समहिषः युद्धे वरुणं करुणंदीनं क्षतवान् कुवेरेण सहितंवन्हिंच जिगाय अजयत् वसुगणंवस्वष्टकं तृणतुल्यं अजीगणत् गणयामास अथवा युतीयत् भयंतत् मरुभूमौ यत्तोयं तद्गणयामास यथा मरुभूमौ तोयं न भवति तथा वायुतोपि भयंतस्यनाभूदितगर्थःसलिटोर्जेरिति कुत्वेजिगायेति ईषत्परि समाप्तौकल्पइतितृणकल्पः गणधातोर्णुरादौलुङि रूपंअजीगणदिति अत्रां तयमकालंकारः द्रुतविलंवितंवृत्तम् ॥ ५१ ॥

इति निखिलसुरा न्विजित्य संख्ये त्रिदशपुरे पुरुहूतता मितोसौ
अधिकृति मधितिष्ठति द्युराजो भ्यवहरति स्वय मेव यज्ञ
भागान् ॥ ५२ ॥

"इतीति" इत्यमुनाप्रकारेण असौमहिषः सर्वदेवान् युद्धेजित्वा स्वर्गेइन्द्रतां प्राप्तोस्ति अथचदिविराजते इतिद्युराडिन्द्रःतस्याधिकारं अधितिष्ठति यस्स्वमेव हि यज्ञभागान् पुरोडाशादीन् अभ्यवहरति खादति अधिशीङ्स्थासांकर्मेतत्र धिकृतौद्वितीया अभ्यवोपसर्गपूर्वकहृञोभक्षणार्थः पुष्पिताग्रावृत्तम् ॥ ५२ ॥

भुवि विकीर्णसुतोरणभूषणा परजनैः कृतधर्षणदूषणा
पति कृते परवश्यमरावती मणिनिपातमिषा
त्वरिरोदिति ॥ ५३ ॥

"भुवीति" अमरावती अमरपुरीपतिंइन्द्रं कृतेविना परवती पराधीनास
ती मणीनां योनिपातः तस्यमिषान्व्याजात् परि रोदिती कीदृशी भुविविकी
र्णानि सुतो रणरूपानि भूषणानि यस्यासा तथा परजनैः कृतं धर्षणमेव दूष
णं यस्यासा अजा अत्रामरावत्याः स्त्रीरूपता वर्णिता यथापतिं विनास्त्री विकी
र्णभूषणा सती परजनैर्धर्षिता चसती रोदिति तद्वदित्यर्थः पतिमितिकृतेयोगे
द्वितीया अत्र न स मणिनिपातः किं त्वश्रुपातः इतिमिषपदेन तद्धर्मायह्नवप्र
तीतेः कैतवापह्नुतिरलंकारः ॥ ५३ ॥

अनुसर तरुणीभिः क्रीडतेऽसौ सुराणां
सुरतरुसुमनोभि र्मोदते नंदने च
दनुसुतनिकुरं वैःसेव्यते कोटिसंख्यै
स्त्रिभुवनजयलक्ष्म्या स्तद्विषाणद्वयी हाः ॥ ५४ ॥

"अनुतर्विति" असौमद्विपः तव तव प्रतिदेवानां कामिनीभिः अप्सरोभिः
सह क्रीडांकरोति अथचपरिजनादि सुरतरूणां पुष्पैः नन्दने देवारामे मोदते
अथतत्रक्रीडमानोभवन्निहैतत्व इत्यतआहुः दनुसुतानां दानवानांनिकुरंवैः
समूहैः कोटिसंख्यैः असंख्यातैरितर्थः सः सेव्यते अतीनास्यद्वनावकाशः न
केवलं तेषामेव वलं सोवलंवते किंतु स्वयमपि वलीतआहुः त्रिभुवनस्य या जय
लक्ष्मी साहाः हाररूपा तस्यविषाणयोः शृंगयोर्द्वयंअस्तिशृंगद्वये नैव त्रि
लोकीतेनजितेतिभावः स्वतद्विषुविषाणंस्यात्पशुशृं गेभदंतयोरित्यमरः मालि
नीछन्दः ॥ ५४ ॥

अस्मिन्दु:खांबुधौनो निपततइतिकर्त्तव्यताविीतवुद्धीन्
प्राणेभ्यो धौतहस्ता न्हरहर करुणा वीक्ष्य न त्वांवृणाद्वि
हंहो नाथै षकालो जलचरयमितानेकपोद्धारधीर
श्रीनाथस्फीतकीर्त्तिप्रतिभटउदितो, न त्वयो
पेक्षणीय: ॥ ५५ ॥

:अस्मिन्निति हेनाथ अस्मिन्दु: खरूपेसमुद्रे नितपत: पतमानान् तथा इतिकर्तंव्यतयावीतारहिता बुद्धिर्येषांतान् तथाप्राणेभ्योपिधौता हस्तायैस्तान् प्राणनाशारहिता नितग्रर्थ: ईदृशान् न: अस्मान्वीक्ष्य हरहरेतिखेदे त्वांकरुणान वृणद्वि नाद्रणोति इतिकाकु: अत्रश्रीघ्रकर्तव्यतांद्योतयंति हंहोइतिआश्चर्ये हेनाथ एषकालस्त्वयानोपे क्षणी य: कालानरप्रतिकर्तव्यतोऽस्त्हत्वात् यदएषकाल: जलचरेणग्राहेण यमितो रुद्धोयोऽनेकयोगजलाधारधीर: सावधानोय:श्रीनाथ विष्णुस्तस्त्रयास्फीता वृद्धिंप्राप्ताकीर्तिस्तस्या: प्रतिभट: सदृश: उदित: यथाग्राहग्रस्तस्य गजस्योद्धारो भटतिहरिणाऽकारितथा ऽप्यास्माकं त्वयापीतिभाव: ॥ ५५ ॥

द्रुहिण हणू तदेन कैश्च दूचै रुपायै
करुणसुरगणे स्मिन्धे हि कारुण्यदृष्टिम्
इति करुणगिर स्ता स्तूर्णमाकर्ण्य वेधा
नियतपरिकरो भूदूतराया च्छमेधा: ॥ ५६ ॥

इतितंवर्णयित्वास्वप्रयोजनमाह: द्रुहिणेति हेद्रुहिणेतियुक्तं संवोधनं दुह्यतिदुष्टेभ्य इतिनिर्वचनात् हेदुष्टघातकधात: ततस्मात् एतेमहिषंकेश्चित् उच्चैरुत्कृष्टै: उपायै: जणुजहि करुणेदीनेदेवगणेच अस्मिन् कृपादृष्टिं धेहि धारय सवेधा: ब्रह्मा इतितेषांदीनागिर: श्रुत्वातूर्णंशीघ्रं उतरायउतरदानार्थं

निबतः वद्धः परिकरोयेनतादृशोऽभूत् कीदृशोवेधाः अच्छानिर्मलामेधाबुद्धिर्यं सत्रेतिसः प्रजामेधयोरित्यसुगागमः छर्विंसायामित्यस्मादिगणेलोटिमध्य पुरुषैकवचनं धीधीरणावतोमेधेत्यमरः ॥ ५६ ॥

श्रीमाञ्छंभोश्चरणसदनीभूतहृच्छंभु नाथोलक्ष्मीनाथंकवि
परिवृढं देशकोऽसूतयंमाम् तेनोद्गीते महिषनिधनेगीत
लक्ष्मीचरित्रे लक्ष्मीकाव्ये विरतिमगमत्सर्गआद्यःशुभंयुः
इतिलक्ष्मीकाव्ये प्रथमः सर्गः

अथकविः स्वजनकनामवर्णनपूर्वकंसर्गमुपसंहरति श्रीमानिति यंमांलक्ष्मीनाथाभिधंश्रीमान् शंभुनाथः श्रीशंभुनाथइत्यर्थः असूतजनयामास कीदृशंमांकवयः परिवृढानायकायस्यकवीनांशिषामित्यर्थः गौणोप्ययंसमासः कतुं विवक्षितत्वान्मुख्यः कविश्रपरिवृढामितितुमुख्योपिअविवक्षितत्वाद्गौणः अन्यथास्वाभिमतिदोषायत्तिः कीदृशः श्रीशंभुनाथः शंभोः शिवस्यचरणयोः सदनीभूतं हृत्मनोयस्यसः तथादेशकः उपदेशकर्तागुरुरितियावत् तेनलक्ष्मीनाथेन उद्गीते लक्ष्मीकाव्येशुभंयुः शुभान्वितः प्रथमःसर्गः विरतिंसमाप्तिं अगमत्प्राप्तः कीदृशेलक्ष्मीकाव्ये गीतंलक्ष्म्या महालक्ष्म्याश्चरित्रंयस्मिन् तथामहिषनिधने तत्पराआख्या अभिधानंयस्यतस्मिन् अहंशुभमितिमांतमव्ययं अहंशुभमोर्युस इतिशुभंयु अधिभूर्नायकोनेताप्रभुः परिवृढोधिपइत्यमरः शुभंयुः स्याच्छुभान्वितइतिच अन्तेपिश्रीशब्दपूर्वकं निजगुरुस्मरणं मंगलाचरणंद्योतयति यथाहभगवान्भाष्यकाराः मंगलादीनिमंगलमध्यानि मंगलान्तानिशास्त्राणि प्रथंतेवीरपुरुषाण्यायुष्मत्पुरुषाणिच भवन्ति अध्येतारश्च प्रवक्तारो भवन्तीति मन्दाक्रांताछन्दः मन्दाक्रांताजलधिषडगैर्म्भौ नतौताद्गुरूचेदितिलक्षणात् सर्गान्तत्वादवृत्तानांभेदः यथाहदंडीसर्गैरनतिविस्तीर्णैः श्राव्यवृत्तैः सुसंधिभिः सर्वत्रभिन्नसर्गान्तैरुपेतंलोकरंजकमिति एवमुत्तरत्रापिबोध्यम् ॥ ५७ ॥

इतिश्रीमच्छंभुनाथात्मज लक्ष्मीनाथकृतायां लक्ष्मीकाव्यव्याख्यायां

*** प्रथमः सर्गः ***

Indira Gandhi National Centre for the Arts

ओं नमः श्रिये

यद्देवा भणथ तथैव नाऽन्यथा तत्
जानामि स्वयमपि तं व्यथावदान्यम्।
पूर्वं हि स्मररिपुणा मया वलीयान्
विज्ञातो युधि हरिणा युयुत्सुना च ॥ १ ॥

ओं नमो विघ्नहर्त्रे अथ किमुत्तरितवानित्यपेक्षायां महिषोत्पत्तिरूपं द्वितीयसर्गं निर्मातुं वीजमाह "यद्देवा इति" हे देवाः यत् यूयं भणथ गदथ तत्तथैव सत्यमेव अन्यथा असत्यं नास्ति उभयथाप्यैकार्थ्यं प्रतिपादनं सत्योत्कर्षज्ञापनाय अत्र स्वदृष्टप्रमाणमाह स्वयमपि तं महिषं व्यथायाः पीडायाः वदान्यं वहुप्रदं जानामि हि यतः पूर्वं युधि युद्धे वर्तमाने तेनसह युयुत्सुना युद्धं कर्तुमिच्छता स्मररिपुणा शिवेन तथा मया ब्रह्मणा हरिणा विष्णुना च वलीयान् अतिशयवलयुक्तो विज्ञातः अत्र ज्ञात्कर्तृकाभिधाने कर्मकारकेतृतीया वलशब्दाच्चातिशयार्थे ईयसुः स्युर्वदान्यस्थूललक्ष्यदानशौण्डावहुप्रदे इत्यमरः अस्मिन्सर्गे प्रहर्षिणीवृत्तं म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षिणीयमितिलक्षणात् ॥ १ ॥

अत्रेमं शृणुत पुरातनेतिहासं
सर्वान्वो व्यथयति येन हेतुनासौ।
नोवध्यो भवति यथा स्वधे भवद्भिः
शक्राद्यैरपि हरिशूलभृत् समेतैः ॥ २ ॥

अथ पुरावृत्तमवतारयति "अत्रेति" अस्मिन्नेवार्थे इमं वर्ण्यमानं पुरातनं इतिहासं पुरावृत्तं शृणुत आकर्णयेहेतुमाह येन हेतुना असौ महिषो वो युष्मान् व्यथयति यथा येन हेतुना च विष्णुशिवयुक्तैरपि इन्द्राद्यैर्भवद्भिर्देवैः स स्वधे युद्धे वध्यः हननीयो नभवति इतिहासः पुरावृत्तमित्यमरः ॥ २ ॥

द्वा वास्तां दनुतनयौ तयो स्तु रंभो
ज्येष्टोऽभू दथ च कनिष्टत: करंभ:।
तौ द्वाव प्यथ चिरतो पि लेभतु र्नो
संतानं मरु रिव सल्लतावितानम् ॥ ३ ॥

"द्वाविति" पूर्वं द्वौ दानवौ सहजावभूतां तयोर्मध्ये रंभनामा ज्येष्टोऽभूत् अथ च कनिष्टः करंभनामाऽभूत् तौ द्वावपि चिरकालेनापि सन्तानं पुत्रोत्पत्तिं नलेभतुः अत्रदृष्टान्तमाह मरुर्निर्जलभूमिः सल्लतायाः विनानं विस्तृतिमिव कनिष्टत इति प्रथमायां तसिः ॥ ३ ॥

तस्यार्थं निरशनताऽस्थि शेषदेहौ
संयम्य प्रबलचलाचलेंद्रियाणि।
निर्दिष्टं निजगुरुणा मनुं जपंतौ
तेपाते तनुरुहहर्षणं तपस्तौ ॥ ४ ॥

"तस्येति" तस्य संतानस्यार्थं निर्गतं अशन माहारो ययो स्तौ तयो र्भावः निरशनता तया अस्थिशेषो निर्मांसो देहो ययो स्तौ रोमहर्षणं तपस्तेपाते रचतुः तपश्चर्णो आत् चक्राते इतिवा पाठः कीदृशौ स्वगुरुणोपदिष्टं मनुं मंत्रं जपंतौ किं कृत्वाप्रबलानि प्रमाथीनि चंचलानि चेंद्रियाणि चक्षुरादीनि विषयेभ्योनि रुध्येत्यर्थः चलं लोलं चलाचलमितप्रमरः ॥ ४ ॥

रंभो मालवटवने वृते च यक्षैः
पंचाग्नेः परिचरणेन शुष्ककायः।
आकंठं पयसि निमज्ज्य पांचनादे
संतेपे गलिततनुः करंभक स्तु ॥ ५ ॥

"रंभइति" रंभस्तु यच्चैवृते मालवटनाम्नि वने पंचाग्नेः सेवनेन शुष्ककायः सन् संतेपे करंभश्च पंचनदस्येदं पांचनादं तस्मिन् पयसिजले आकंठं कंठपर्यंतं निमज्य गलिततनुः क्लिन्नदेहः सन् संतेपे क्वचिद्वयोरिति पांचनदे द्वयोर्दीर्घः करंभकइतिस्वार्थे कन् ॥ ५ ॥

तौ दृष्ट्वा तपसि रता वदभ्रकालं
शंका भून्निजपदधर्षणे मघोनः
तंदेशं सपदि जगाम तौ जिघांसु
र्हंतुं ना शक दुरु तेजसं स रम्भम् ॥ ६ ॥

"ताविति" तौरंभकरंभौ इत्थंवहुकालं तपसिरतौ दृष्ट्वामघोन इंद्रस्य नि जपदस्य स्वर्गस्य धर्षणे शंका अभूत् स्वर्गंधर्षितुमिमौ तपत इतिशंकाजाते त्यर्थः इतिनिश्चितस्य तौहंतुमिच्छुः तंदेशं तयोस्तपःस्थानं शीघ्रंजगाम आदौरंभं प्रतिहंतुंजगामेत्याह स इंद्रः तंरंभंहंतुं नसमर्थोऽभूत् यतहेतुः उरुतेजसमिति तेजस्विनं यदभ्रं वहुलंवह्नित्यमरः ॥ ६ ॥

अंभोंत मुंहु रथ दंभिचक्रवर्त्ती
ग्राहत्वं निजवपुषो विधाय यत्नात्
पद्भ्यां हं तमथ करम्भकं गृहीत्वा
हंतिस्म द्विप इव पादपं पयःस्थम् ॥ ७ ॥

"अंभोनरिति" मुहुःपुनः रंभं त्यक्त्वा करंभनाशाय अंभोंतर्जलमध्ये स इन्द्रः दांभिकेषु चक्रवर्त्तीं महादांभिक इत्यर्थः स्वशरीरस्य ग्राहत्वंजलजीव विशेषत्वं विधायकृत्वा ग्राहीभूत्वेत्यर्थःतं पयःस्थं करंभं पद्भ्यां यथातथागृहीत्वा हंतिस्म

जघान खं क इव पयस्यं पादपं सच्च द्विप इव समूलाच्चत जीवेंचुच्चन् छात्रप्रपदा णामिति णम् पदोपिजीवत्वान्नदोषः ॥ ७ ॥

तं नीत्वा यमसदनं दनो स्तनूजं
शोकेन स्वय मपि सोदरस्य मर्त्ता ।
रम्भो सा विति हृदि निश्चिकाय मायी
भूयो गात्तडिदिव खं तदं प्रदश्य ॥ ८ ॥

"तमिति" समायी इन्द्रः तंकरंभं यमसदनं नीत्वा हत्वेत्यर्थः इदीति निश्चि काय निश्चयंप्राप इति किं असौ रंभोपि सहजस्य करंभस्य शोकेन स्वय मेवमर्त्ता मरिष्यति किं मम मारणेनेत्यर्थः भूयस्तदनंतरं तदं प्रदश्यविद्युदिव खोकाशं प्रतिजग्मिवान् ॥ ८ ॥

श्रुत्वा यो निजसहजं हतं स रंभो
दुःखार्त्तो व्यलपति गद्गदस्वरेण ।
चित्तं मे दहति हि शोककृष्णवर्त्मा
धक्ष्यामि स्वय मिदं मंग मग्निमध्ये ॥ ९ ॥

"श्रुत्वेति" अथ स रंभः स्वभ्रातरं हतं श्रुत्वा दुःखेन आर्त्तः सन् गद्गदस्वरेण यथाभवति तथा विललाप किंविललापेत्याह मेममचित्तं अयंशोकाग्निर्दहति अत इदमंगं स्वयमेवाग्निमध्ये धक्ष्यामि दग्धं करिष्यामि वर्त्तमानसामीप्ये लृट् वह्निः कृष्णवर्त्मा त्यमरः ॥ ९ ॥

मत्वेति स्वकनिधनायदानवेंद्रः
स्वरेन स्वकचचयं करेण हत्वा ।

खड्गं चाप्य परकरेण तिग्मधारं
मूर्द्धानं ज्वलनले स होतु मैच्छत्

"मत्वेति" सदानवेंद्रः राक्षसः इति मत्वा निश्चित्य स्वकस्य स्वस्य स्वशिर सीवा निधनाय हननार्थं सव्येनवामेन करेण स्वकेशसमूहं गृहीत्वा अपरेण दक्षिणेन करेण च तीक्ष्णधारं खड्गं धृत्वा मस्तकं पुरतः जाज्वल्यमाने अग्नौ होतुं ऐच्छत् सुखशीर्ष जलेषुक्रमितिहेमः यातुधानः पुण्यजनो नैऋतेया तुरचसी इत्यमरः कचः केशः शिरोरुह इति च ॥ १० ॥

ग्रीवाया अतिथि मसिं चकार यावत्
प्रत्यक्षो भवदनलः क्षणेन तावत्।
मा कार्षीर्दनुसुत साहसं स्वहत्या
नो सूतेविमलफलं जगाद चेदम्॥ ११ ॥

"ग्रीवायाइति" स रंभः यावत् ग्रीवाया अतिथिं ग्रीवोपरिस्थं असिं खड्गं चकार तावत्अनल अग्निः क्षणेन प्रत्यक्षोभवत् अथचेदंजगाद इतिकिं हे दनु सुत साहसं शीघ्रतां माकार्षीः न कुर्वित्यर्थः यतः स्वहत्या विमलं फलं स्वर्गादि रूपं नोसूते नजनयति किंतु नरकदात्रीति परिशेषसिद्धिः मायोगे लोडर्थेलुङ् तस्मिं स्मातिचाऽटोलुक् ॥ ११ ॥

एकांतं भवति हि केन कस्य सगः
पांथानामिव तरुमूलसंगतानाम्।
सर्वोऽपि स्वकृत मिहाश्नुते हि लोकः
शोकं तज्जहिहि हितं वरं वृणीष्व १२

ननु प्राणसम्मिते स्वभ्रातरि मृते किं जीवितेनेति तदाशयं बुध्वा लौकिक दृष्टांतेन भ्रात्रादीनां संगस्यास्थिरतां बोधयति "एकांतमिति" इरंभ एकांतं निरंतरं केनपुरुषेण कस्यपुरुषस्य संगो भवति नकेनापि कस्येत्यर्थः अत्रदृष्टांत माह वृक्षमूले संगतानां मिलितानां पांथानां पथिकानामिव यथाध्वर्मार्त्ताः पथिकाः वृक्षमूले तावत् क्षणंमिलित्वा पुनः स्व स्वदेशं प्रतिगच्छंति तद्वद्भ्रात्राद योपोति भावः अत्रहेतुमाह हि यतः सर्वोपिजनःस्वकृतं पूर्वजन्मकृतमेव अश्नुते भुनक्ति नकस्यचित्कर्म अन्यो भुनक्तीत्यर्थः तत्तस्मात्कारणात् शोकंजहि हित्यज हितं स्वाभीष्टं यदर्थं तपसि तं वरं वृणीष्व लोकस्तुभुवनेजने इत्यमरः ॥ १२ ॥

आश्वस्तः श्वसनसहायिनेति चक्री
कोशस्थं त्वरुगतपाणिना कृपानम् ।
निर्मोकं भुजग इवोल्वणं स शोकं
प्रोत्सृज्योत्कलितमना वरीतुमासीत् १३

"आश्वस्तइति" श्वसनो वायुः सहायोय स्येति तेनाग्निना इत्येवं सिद्धांत वाग्भिः आश्वस्तः सरंभः त्सरी खड्गमुष्टौ गतोयः पाणिः हस्तः तेन कृपाणं खड्गं कोशस्थं चक्री ततश्च उल्बणं महांतं शोकं प्रोत्सृज्य त्यक्त्वा वरीतुं वरमादातुं उत्क लितमनाः उत्कंठितचित्तआसीत् शोकत्यागमात्रे दृष्टांतमाह कंकइव निर्मो कं कंचुकं भुजगः सर्पइव त्सरुः खड्गादिमुष्टौस्यादित्यमरः समौकंचुकनिर्मोका विति च उत्कंठोत्कलिके समे इति च ॥ १३ ॥

तुष्ट स्त्वं मयि भगवन्भवानऽनाथे
पुत्रं मे वितरतु इत्तथत्र शत्रुम्

नो वध्यो भवतु स कस्यचित् त्रिलोक्यां
स्वाराज्यं स्वय मनुपप्लवं भुनक्तु ॥ १४ ॥

"किंवव्रेइत्याह" हेभगवन् मयि अनाथे चेद्यदि भवान् त्वं तुष्टः तर्हि मे मह्यं वृत्तशत्रोरिंद्रस्य शत्रुं शातनशीलं पुत्रं वितरतु ददातु सच त्रिलोक्यां कस्यचिदपिवध्यः हननीयो नभवतु स एव च स्वः स्वर्गसत्राराज्यं अनुपप्लवं निरुपद्रवं स्वमेवभुनक्तु भवच्छब्दस्य नामत्वाद्वितरत्विति प्रथमपुरुषः स्वाराज्यमित्यु परोरीतिर सोपेन्द्र लोपेइतिपूर्वस्यदीर्घः स्वरव्ययंस्वर्गनाकेत्याद्यमरः ॥ १४ ॥

इत्युक्तः प्रतिवचनं तदा ददे ग्नि
र्यांकाञ्चि द्धुरि वनितां यदाऽक्रमिष्यः ।
त्रैलोक्येश्वरसुतवांस्तदा भविष्यः
स द्वाक्यं मम न मृषेति मर्षणीयम् ॥ १५ ॥

"इत्युक्तइति" तेनरंभेन इत्युक्तः अग्निः तदा प्रतिवचनं उत्तरं ददे किमित्याह हे रंभ धुरिअग्रे यांकांचित् वनितांस्त्रियं यदाअक्रमिष्यः तदा त्रैलोक्य स्यअधिपोयः सुतः तद्वान् अभविष्यः इदंममवाक्यं सदिति सत्यमेवमर्षणीयं विचारणीयं मृषामिथ्या न। अक्रमिष्यदितिक्रियातिक्रमेस्यप् ईश्वरः यंकरोऽधीश्वे इतिविश्वः । १५ ।

इत्युक्त्वा सपदि तिरोहिते हुताशे
ह्याकाशे जलद इवाऽनिशं प्रदृष्य ।
दैत्येन्द्रः कि मपि सुखं हृदा प्रपेदे
संप्राप्याऽमृत मिव पूरुषो मुमूर्षुः ॥ १६ ॥

"इत्युक्तेति" इतिपुत्रोत्पत्तिप्रकारमुक्त्वा शीघ्रं वर्षां कृत्वा मेघइव आकाशे धनेनातिरोहिते सति स दैत्येंद्रः रंभः किमपिअनिर्वचनीयं सुखं मुदा कृत्वाप्राप दृष्टान्तमाह मुमूर्षुःमरणासन्नःपुरुषः अमृतमिव संप्राप्यसुखंप्राप्नोति तद्वदित्यर्थः १६

स्मारं स्मार मथ यवीयसः परासो
र्दृग्भ्रां सो विरलगलज्जलाप्लुतास्यः ।
लब्ध्वापि प्रवरवरं सुदुःखपूर्णः
तंदृष्ट्वा जिगमिषितो बभूव रम्भः ॥ १७ ।

"स्मारमिति" अथ स रंभः वन्हितः प्रवरंश्रेष्टं वरंलब्ध्वापि पुनः यवीयसः कनिष्टस्य करंभस्य स्मारंस्मारं कनिष्टंस्मृत्वास्मृत्वेत्यर्थः दृग्भ्रांनेत्राभ्यां सकाशात् अविरलं सन्ततं गलत्स्रवत्यज्जलं तेन आप्लुतं आस्यं मुखं यस्यसः दुःखेनपूर्णः सन् तं मृतंकरंभं दृष्ट्वा जिगमिषितोवभूव गंतुमिच्छाजिगमिषा साजाता अस्येतिवः जातार्थे इतप्रत्ययः पौनः पुन्येणमपदंद्विसे तिपूर्वकालार्थे स्मृतेर्द्वि त्वं णमुचतद्योगे च यवीयसइतिमर्मषष्टी यवीयोऽवरजानुजा इत्यमरः । १७ ।

अथयुग्मम्

तं देशं प्रति चलतः स्वयं चरंती
सन्नीलोत्पलदलमेचकांगयष्टिः ।
पंचेषो रिव धनुषी सुहु विंषाणो
धुन्वंतो करिकलभीव चारुकर्णी ॥ १८ ॥

अथयुग्मं तंदेशं प्रतिचलतइत्यस्यद्वितीयश्लोकोत्तरार्धेनान्वयः अथतं देशं करंभवधस्थानंप्रतिचलितः तस्यरंभस्य पथिमार्गे एकांतेरहसि दृशोविषये काचिदेव त्रिहायणीत्रिवर्षामहिषी आसीत् तेनदृष्टेत्यर्थः कीदृशीमहिषी स्वयंचरन्ती तथासत् शोभनं यत् नीलोत्पलस्य दलंपत्रं तद्वत्मेचका कृष्णाअंग यष्टिः यस्यासा तथापंचेषोः कामस्यधनुषी इवविषाणे शृंगे धुन्वन्ती कंपयंती शृङ्गयोर्वक्रत्वात् धनुषा साम्यं तथाकरिकलभीवराजमाना पीवरत्वात् यद्वा विषाणयोः करिदन्तवाचकत्वा विषाणे धुन्वंतीत्यनेनैवश्लेषेणोपमाणोपमेयभा वोस्तुयद्वाचारुकर्णीत्युत्तरविशेषणेनास्तु १८

कृष्णांगी मसृणतनूरुहावलीका
कामार्त्ता खुरहननैरिवाह्वयं ती ।
तस्याऽभोदथ पथि दृक्पथि त्रिहायण्ये
कांते खलु महिषी च काचिदेव ॥ १९ ॥

पुनः कीदृशीतयाह "कृष्णांगीतर्धेन" कृष्णानि अङ्गानि यस्याः सातथा मसृणा स्निग्धा तनूरुहाणां रोमाणां आवली पंक्तिर्यस्याः तथा खुराणां हननैः पृथिव्यांमारणैः कामार्त्तासती आह्वयन्ती पतिं कर्तुं रंभं आमत्रयंतीवेतरुप्रेच त्रयोहायनाः अस्याःदामहायनेतिङीप् त्रिचतुर्भ्यां हायनस्येतिणत्वं कलभीति प्रथमवयोवाचित्वात्ङीप् चारुकर्णी कृष्णांगीति स्वांगत्वात् कालश्यामलमेचका इत्यमरः कलभः करिशावकइतिच विषाणेधुन्वन्तीत्यादौ स्वभावोक्तिर लंकारः ॥ १९ ॥

तां दृष्ट्वा पशुमपि भाविनेर्यमाणो
वातूला बलरंहसेव तूलः ।

रंभोऽचीकमत च सापि तं सुपुच्छी
चित्ते न स्मरशरसंहतेः शरव्यम् ॥ २० ॥

"तामिति" तां महिषीं पशुमपि दृष्ट्वा स रंभः वातूलस्य वात्याया: पतु लवलेनरंहसावेगेन तूलद्व भाविना भवितव्ये न ईर्यमाणः प्रेर्यमाणः अचीकम त ऐच्छत् सासुपुच्छीमहिष्यपि चित्तेन कामबाणसमूहस्य लक्ष्यीभूतन्तं रंभं च चीकमत कमिश्वुरादितुात्लङाङ्द्विश्च वातूलो वातुलेपिस्याद्वात्यायां मारुता सहे इतिहैमः लक्ष्यं वेध्यं शरव्यं इत्यमरः ॥ २० ॥

तत्रासीत् खलु स दनानलो हि साक्षी
तद्वैर्यस्मरविबधोजुहाव हव्यम् ।
आनंदो इवसलिलैर्वभूव दात
स्वांतंतत्परिणयआत्मपारिवर्हे ॥ २१ ॥

"तत्रेति" तयोर्विवाहे कामाग्निरेव साक्षी वभूव नतुवाह्योग्निः तचका माग्नौच कामएव विबुधोविवाहकारयिता तयो र्धैर्यरूपं हव्यं जुहाव तत्र च आनन्दो इव सलिलैःसात्विकभावोत्पन्नैरश्रुजलैः स्वेदभरैर्वा तस्याः स्वांतं मन एवदात्ववभूवकी० विवाहे आत्मैव पारिवर्हं यत्र ॥ २१ ॥

इत्थं तौ विगलितकाम भिन्न भावौ
धावंता वभिसुख मेव बद्धदृष्टी ।
अन्योन्यं परि गतचारु चित्तवृत्ती
रेमाते रहसि मुदा मिथोमिलितवा ॥ २१ ॥

"इत्थमिति" अत्रान्योन्यमितरस्य प्रत्येक विशेषणं संबंध: तौ महिषीरंभौ इत्थमन्योन्यं नष्ट:कामाद् भिन्नोभावश्चेष्टा ययो:तथा न्योन्यं सम्मुखत्वमेवधावंतौ तथान्योन्यं वद्धे दृष्टीयाभ्यांतौ तथाऽन्योन्यं परिणता चारु मनोज्ञा चित्त वृत्ति र्ययोस्तौ तादृशौ रहस्येकान्ते मिथो मिलित्वा मुदा रेमाते ग्राम्यधर्मंचक्रतु रित्यर्थ: ॥ २१ ॥

इत्यवंविषमशरक्षणे तयो र्वै
भूयांसो दिननिकरा इता: क्षणत्वम्।
तादृप्यं भजति हि वस्तुनि प्रगल्भे
सर्वोऽपि प्रकट मयोऽग्निता मिवाग्नौ ॥ २२ ॥

"इत्येवमिति" इत्येवममुनाप्रकारेण विषमशरस्य कामस्य क्षणे उत्सवे तयोर्बहवोपि दिनसमूहा: क्षणत्वं क्षणकालमात्रतां इता:प्राप्ता: उत्सववाचकक्षण शब्दस्य श्लेषेणकालविशेषवाचकत्वेपि क्षणत्वमासेषुदिनेषु तत्तुल्याप्रस्तुत प्रमाणं स दृष्टांतमाह हियत: प्रगल्भे उद्रिक्ते वस्तुनि पदार्थे सर्वमपीतरं वस्तु तादृप्यं प्रगल्भवस्तुरूपतां प्रकटं भजति प्राप्नोति कस्मिन् कामिव अयो लोह: अग्नौ तप्यमानं सत् अग्नितामिव अत्रक्रमाद्विशेषसामान्यविशेषाणां न्यसनाद्विक स्वरालंकार: क्षण:पर्वोत्सवेपिस्यात्तथामानेप्यऽनेह स इतिविश्व: ॥ २२ ॥

सा काले त्वथ गमिते दधार गर्भं
सर्वेषा मिव विपदंकुरं सुराणाम्।
नामोदो वपुषि ममौ च पश्यतस्तं
तस्यावधे: सलिल मिवो दिते हिमांशौ ॥ २३ ॥

"सेति" अथानन्तरं सा महिषी कतिपयेकाले गमितेसति गर्भं दधार अत्रोत्प्रेक्षते सर्वेषां सुराणां विपद: अंकुरं वीजमिव अथच तं गर्भंपश्यत: तस्य

Indira Gandhi National Centre for the Arts

रंभस्य शरीरे आमोदः प्रीतिः नममौ अतिप्रवृत्वात् वहि र्निर्यस्तामेत्यर्थः कस्य किमिव हिमांशौ चन्द्रे उदितेसति समुद्रस्य जलमिव यथांतर्नमातितद्दित्यर्थः ॥ २३ ॥

मा धाक्षीर्मदनशरार्दितो ह्ययारिः
कोप्येता मिह पतिदेवतां सगर्भाम् ।
इत्युच्चैः करधृतचारुचन्द्रहासः
कांतारे पशुप इवाऽऽव तां स कान्ताम् २४ ॥

"मेति" इहवने एतां महिषींपतिदेवतां पतिव्रतां तथा सगर्भां कोप्यन्यो महिषः कामबानभिन्नः सन् माधाक्षीत् न धर्षतु इत्याशयेन उच्चै र्यथास्या त्तथा करेधृतश्चारुः चन्द्रहासः खड्गोयेन सः रंभः कांतारे दुर्गवर्त्मनि तां कांतां पशुपालइव आव ररक्ष चन्द्रहासासि रिष्टयः इत्यमरः कांतारं वर्त्मदुर्गम मितिच ॥ २४ ॥

दृष्ट्वा तां वनमहिषोऽभ्यगा च्च कश्चित्
कामार्त्तो विपिनभुवं लिखन्खुराग्रैः ।
आयांतं पुरत उदीक्ष्य तं च रंभः
खड्गेन प्रतिहतवा न्विषाणमध्ये ॥ २५ ॥

"दृष्ट्वेति" अथ च कश्चित् वनमहिषः तांमहिषींदृष्ट्वा कामिनार्त्तः सन् वन पृथ्वीं खुराग्रभागैः लिखन् विकर्षन् सन् अभ्यगात् अभिमुखमाययौ ते च स रंभः अग्रेआयांतंदृष्ट्वा शृंगयोर्मध्येखड्गेनजघान ॥ २५ ॥

स क्रुद्धः पदनिहतः फणीव शृंगे
तस्योरस्यति विपुले जघानधुत्वा ।
तेनैवं वत निहतः पपात रंभो
भूभागे मरुदुहरंहसेव रंभा ॥ २६ ॥

"स इति" सः महिषः पदानिहतः सर्पइव तेन खड्गेन हतः सन् क्रुद्धो भूत् अथ च शृंगे धुत्वा कंपयित्वा तस्यरंभस्य अतिविशाले वक्षसि जघान स रंभः एवं तेन महिषेण निहतः वतखेदे भूभागे पपात केनके ववायोः वहुवेगेन रंभाकदलीव ह्रुत्वे त्यत्रअन्तर्भाविरयर्थः ॥ २६ ॥

भर्त्तारं पतित मुदीक्ष्य गुर्विणी
सा पश्चात्तं मदनजवेन धावमानम् ।
संयुक्ता युगपदनल्पशोकभीभ्यां
यक्षाणां शरण मथो जगामतूर्णम् ॥ २७ ॥

"भर्तारमिति" सा गर्भवती महिषीपतिं रंभं पतितंदृष्टा पश्चाच्च काम वेगेन कर्त्रा धाव्यमानं तं महिषं दृष्ट्वा युगपत् एकदैव अनल्पः भूयान् यः शोकः भीः भयं च ताभ्यांयुक्ता अथ शीघ्रं यक्षाणां मालवटवासिनां शरणं जगाम गर्भिणी गुर्विणीसमे इत्यमरः ॥ २७ ॥

ते मत्वा दनुजविलासिनी मनाथां
तत्पश्चा दथ महिषं च दुर्विषह्यम् ।

तं सर्वे निशितशरैः शिरो विदार
मासारैर्दव मिव वारिदा निजघ्नुः ॥ २८ ॥

"तेइति" ते यक्षाः तां रंभस्त्रियं अनाथां ज्ञात्वा अथ तस्याः पश्चाच्च महिषं दुःखेन सोढुं शक्यं ज्ञात्वा तद्रक्षायै ते सर्वेपि यक्षाः तं महिषं तीक्ष्णबाणैः शिरोविदार्यहतवंतः कैःकंकेइव धारासंपाते दवाग्निं मेघाइव विदारमितिल्लुर्यणम् प्रत्ययः धारासंपातआसार इत्यमरः ॥ २८ ॥

निर्दिष्टा अथ च तया पतिं विचेतुं
गत्वा ते ददृशु रदूरतो हतं तम्।
नीत्वा तं सपदि निजाश्रमं चितायां
तच्छयरां विदधु रथेंधनै श्चितायाम् ॥ २९ ॥

"निर्दिष्टाइति" अथ तं हत्वा तया महिषा भर्तारं अन्वेषितुं आज्ञप्ता ते यक्षाः तस्मात् स्थाना त्गत्वासमीपएव तं रंभंहतं ददृशुः अथ तं स्वस्थानंनीत्वं प्रापयित्वा काष्टैः निचितायां चितायां तस्यशय्यांचक्रुः विपूर्वकदधातेः करणार्थः ॥ २९ ॥

वीक्ष्याथो निजपति माश्रितं चिताया
मारोढुं स्वय मपि तेन साक मैच्छत्।
सा नूनं दहन मनूनदुःखदूना
शोकाग्नेः पुरत इमं हिमं हि मेने ॥ ३० ॥

"वीक्ष्येति" अथ सा महिषी स्वभर्त्तारं चितायां आश्रितं वीक्ष्य स्वयमपितेन सहचितामारोढुं ऐच्छत् ननुवन्हिदाहपीडां सोढुं प्राणत्यागदुखंच सा कथमैच्छ

दित्याह सेति नूनं यतः सा महिषी अनूनेन महता दुःखेन दुःखितासती शोकरूपाग्नेः अग्रेदमंप्रत्यचाग्निं हिमं हि हिम मेव मेने शोकाग्नप्रेपेक्षया तमग्निं शीतलं जानातिस्मेतिभावः अन्योप्यग्निदग्धः शीतलं वस्तु कांक्षते तथा सापि शोकाग्नि दग्धा तमग्निं तापनात्मकं मत्वाऐच्छदितिभावः साकमित्यस्यसहार्थत्वात्तद्योगे तृतीया ॥ ३० ॥

माधाच्यौ मंहिषि वपु र्निजं सगर्भं
ते यच्चाः प्रतिषिषिधु र्हि यावदेनाम् ।
ताव त्सा द्रु त मनले समिद्धिरिद्धे
पुप्लोष स्ववपु रहो चितां प्रविश्य ॥ ३१ ॥

"मेति" हे महिषी सगर्भं निजं शरीरं माधाचीः नदहइति ते यच्चाः यावदेनां प्रतिषेधितवंतः तावदेव सा शीघ्रं काष्टैः सम्यक्ज्वलितवह्नौ चितां प्रविश्य अहोआश्चर्यंस्वशरीरं ददाह दाहार्थप्लुषधातोर्लिटिरूपंपुप्लोषेति ३१ ॥

तस्या द्वा वथ जनितौ ज्वलच्चितायां
चिंताया इव सहसैव दुःखशोकौ ।
कुर्वंतौ निजमहसा महोविहीनं
तं वन्हिं खलु प्रतिबंधकौ मणीव ॥ ३२ ॥

"तस्यादिति" ज्वलच्चितायां सत्यां तस्याः महिष्याः द्वौ पुत्रौ इतिशेषः सहसैव जातौ कस्याः काविव चिंतायाः दुःखशोकाविव ननु तत्र किं न दग्धा वित्याह स्वतेजसा तं वन्हिं खलु महसा दाहकशक्त्याविहीनं कुर्वंतौ काविवप्रतिबंधकौ अग्निशक्तिप्रतिबंधकर्त्तारौ मणीइव अत्रद्विवचनेईत्वात्प्रगृह्यत्वं पिमणी

बादिवर्जं मित्युक्तेः संधिः यद्वावशब्दस्यैवइवार्थः अत्र प्रकारस्य संयुक्तता तत्का रस्य दीर्घत्वं प्राप्तेपि लघुतापि क्वचित्तुरीयस्थिते न दोषः सरस्वतीकंठाभरणेप्युक्तं यदा तीव्रप्रयत्नेन संयोगादेरगौरवं न छंदोभंगमप्याहुस्तदा दोषाय सूरय इति ३२

दृष्ट्वाऽथोन्नत बहुविस्मया हि यक्षा
निन्युस्तौसपदि निजाऽङ्कमात्तमोदाः।
संतुष्टा वथ शुशुचु र्न दंपती तौ
कः शुक्तिं स्मरति हतां हि जातमुक्ताम् ॥ ३३ ॥

"दृष्ट्वेति" अथ तौ दृष्ट्वा क्रतौ बहुर्विस्मयौ यै स्ते यक्षाः जातहर्षाः संतः निजो त्संगे तौनिन्युः अथच दग्धौ तौ भार्यापती न शुशुचुः तयोः शोकं न चक्रुः दृष्टांतमाह हियतः जातमुक्ताफलां शुक्तिं हतांविनष्टांकः स्मरति नकोपीत्यर्थः प्रतिवस्तूपमेयं उत्संगचिन्हयोरंक इत्यमरः॥ ३३ ॥

कृत्वाथोसह विधिना तयोर्गतास्त्रोः
सौहार्द्दादवरत सौर्ध्वदैहिकादि।
नाम्नातावथमहिषं च रक्तवीजम्
आजुहवुर्विदित परावरार्थभावः॥ ३४ ॥

"कृत्वेति" अथ यक्षाः सौ हार्दात्स्नेहात् तयो र्महिषी रंभयो र्मृतयोः विधिना शास्त्रोक्तमार्गेण सह निरंतरं और्ध्वदैहिकादिकर्म कृत्वा तौ जातौ नाम्नामहिषंरक्तवीजं चेति आजुहुः आमंत्रयामासुः प्रथमजातस्य महिषेति नामचक्रुः पश्चाज्जातस्य रक्तवीजेति च को० यक्षाः विदिताः ज्ञाताः परावरार्थस्वभावाश्चेष्टायै स्ते अयमेतद्गुणविशिष्टो भविष्यती तिवेत्तारः॥ ३४ ॥

रिङ्गन्तौविपन-सुचिक्कणस्थलीषु
कूर्द्दंतावतिचपलौ सुहुर्भ्रमन्तौ ।
तैर्यच्चैर्मधुरफलैः सुपोलितौ तौ
वर्धाते इव विषयैर्हिमोह कामौ ॥ ३५ ॥

अथतयोर्बालक्रीड़ामाह "रिंगंताविति" तौमहिषरक्तवीजौ वनस्य चिक्कण स्थलीषु स्खलंतौ तथाकूर्द्दंतौ अतिचपलौ पुनः पुनर्भ्रमंतौ च तैर्यच्चैर्मधुरफलैश्चसुपालितौ विषयैः पालितौमोहकामाविव वर्धाते रिंगंताविल्यादौबालस्वभाववर्णनात्स्वभावोक्तिः ॥ ३५ ॥

आसीनो निविडतरुस्थले कदाचिन्
मीमांसा-मितिमहिषश्चकार चित्ते ।
पैतृवधात्कथ मनृणो भवामि वैरात्
केनेन्द्रं बलिनमहं लघुर्जयामि ॥ ३६ ॥

अथ बालत्वं विहाययूनोमहिषस्यवृत्तमाह "आसीन इति" समहिषः कदाचित् निविडच्छायवृक्षमूलेस्थितः सन् चित्ते इतिमीमांसांचकार विचारयामास इति किं पितृव्यस्यकरंभस्य हननोत्थात् वैरात् कथमहमनृणऋणरहितो भवामि अथ च अहंलघुः अल्पः बलिनमिंद्रं कथं जयामि मीमांसांचकारेत्यत्र व्यवधानेप्याम् प्रत्ययसंभवस्यतंपातयां प्रथममासेत्यादौदृष्टत्वादेकंपदमपि ३६

शक्रोपि स्वभुजबलेन नैवशक्तो
यागानां खलुशतकं हि तस्य शक्तिः ।

Indira Gandhi National Centre for the Arts

तस्मात्तन्मखशतकाधिकं तपोऽहं
कस्मिंश्चिच्छिखरिणि कर्तुमाशु यामि ॥ ३७ ॥

ननु शक्रस्य किं बलमस्तीति विचार्य निश्चिनोति "शक्रोपीति" इंद्रोपि निज भुजबलेनैव न शक्तः किंतु खलु निश्चये अश्वमेधाख्ययज्ञानां शतकमेव तस्य शक्तिरस्ति शतयज्ञान्कृत्वैव स इंद्रतां प्राप्त इति भावः तत्तस्मात् अहमपि तद्यज्ञशतकादप्यधिकं तपः कर्तुं कस्मिंश्चित्पर्वते यामि ॥ ३७ ॥

इत्येवं प्रचुरचिरं विचार्य चित्ते
विन्यस्य स्वकमनुजं च यक्षमध्ये ।
हेमाद्रिं जिगमिषितो बभूव सिद्ध्यै
द्रोणाद्रिं प्लवग इवौषधीविचित्यै ॥ ३८ ॥

"इत्येवमिति" समन्वयः इत्येवं बहुचिरं चित्ते विचार्य इदमेव हितमिति निश्चित्य निजमनुजं रत्नबीजं च यक्षाणांमध्ये स्थापयित्वा सुमेरुपर्वतं स्वाभीष्ट सिद्धये गंतुमिच्छुर्बभूव कस्मै कं क इव पुरा औषध्याः अन्वेषणाय द्रोणंनाम पर्वतं प्रति प्लवगः हनुमान-इव पूर्वंहि लक्ष्मणे युधि मूर्च्छिते रामेणाज्ञप्तो हनुमान् जीवनौषध्यर्थं द्रोणाद्रिंगतवान् इत्यादिरामायणादवगंतव्यम् ॥ ३८ ॥

लांगूलं सपदि विवृत्य जातवेगः
संस्फाल्याऽवनिमचलोपलान्विकीर्य ।
उन्मूल्य श्वसन जवेनपादपौघान्
संपूर्याप्रतिमरवैर्दिशो दशापि ॥ ३९ ॥

अथ द्वाभ्यां तद्गमनप्रकारमाह "लांगूलमिति" तावद्दितीयपद्योत्तरार्धं व्याख्या समहिष: शीघ्रंसुमेरोः समीपमगात् कं कइव कल्हारंकमलं अतिसौरभार्थीभ्रमर इव महिषपक्षेतु सुराणां सूरसरवा भा सौरभा तामतिक्रांता भाऽतिसौरभा तदर्थीत्यर्थ: समयानिकषाहाप्रतियोगेष्वितिद्वितीया किं कृत्वा पुच्छंशीघ्रं वेष्टयित्वा तथाजातवेग: सन् भूमिंताडयित्वा वेष्टितपुच्छेनेत्यर्थः तथा पर्वतानांपाषाणान् विकीर्य संघात्पृथक् कृत्वा तथाश्वासवेगेन वृक्षसमूहान् उन्मूल्य मूलादुत्पाट्य तथा अनुपमशब्दैः द्यावाभूमिसहिताः प्राच्याद्यष्ट दिशः संपूर्य पूरयित्वा ॥ ३८ ॥

उत्क्रम्याचल विपिन ह्रदस्रवंती:
तत्संस्थानथ च निपीडयञ्जंतून्।
हेमाद्रिं लघु निकषा ससैरिभोऽगात्
कल्हारं भ्रमर इवातिसौरभार्थी ॥ ४० ॥

पुनः किं कृत्वेत्यपेक्षायामाह "उत्क्रम्येति" पर्वतवनसरोजनदीरुल्लंघ्य तथा तेषुपर्वतादिषुस्थितान् सर्वान् जीवान् व्यथयित्वायुग्ममिदं ॥ ४० ॥

तत्रासौ मरकतवल्युपत्यकाया मेकांते
विमलतरा सुदीर्घा भूमिम्।
तं शासन्नचल मिवाऽचलत्व मुच्चैः
निश्चेष्टः परमतप श्चकार रांभिः ॥ ४१ ॥

"तत्रेति" असौरांभि: रंभसुत: महिषः तत्रसुमेरौ मरकतोनीलमणिः उपलक्षणमेतत् मणिमतीत्यर्थः तत्रापि उपत्यकायां आसन्नभूम्यां एकांतेअति

शयेननिर्मलांभूमिंदृष्ट्वा निश्चेष्टः सुस्थिरः सन् परमंतपः चकार असत्सुस्थिरता मुत्प्रेक्षते किं कुर्वन्निव तं अचलं सुमेरुं अचलत्वं निश्चलत्वमिव उच्चैःशासन् शिक्षयन् अत्राचलस्यापिचलत्वशासनादतिशयोक्तिः उपत्यकाद्रेरासन्नाभूमि रित्यमरः ॥ ४१ ॥

मत्तोऽमी अधिकतरा धराहृहाः किं
येभ्योऽहं सतत मिहार्थये फलानि ।
भोक्ष्ये हं फल मथवे ति मन्यमानः
संपूर्णे तपसि च नो फला न्यभुंक्त ॥ ४२ ॥

अथतपसि फलान्यपिसनाभुंक्तेत्याह "मत्तइति" समहिषः इतिमन्यमा न इव तपसि फलान्यपिनाभक्षयत् इति किं अमीवृक्षाः मत्तः मत्सकाशात् किं अतिशयेन अधिकाः येभ्योवृक्षेभ्यः अहंदीनवत् इहसंततं फलानियाचे या ञ्चाहि अधिकेशोभते नहीने अमीतुजडत्वात्मदपेक्षयाचलत्वा च्चहीनाइतिभावः अथवा इतिमन्यमानोनाभुंक्त इति किं अहंतपसि संपूर्णेसति एकमेवफलं स्वाभीष्टरूपं भोक्ष्ये किमेभिर्भुक्तैरित्यर्थः अमीअधिकेत्यत्र अदसोमादिति प्रगृह्यत्वात्सं ध्यभावः ॥ ४२ ॥

सौ हित्ये प्रभवति हेतु रेष वायुः
व्यालानां तपसि न सिद्धिदा हि तृष्णा ।
आहाराय न चक्लृपे स चेति वायुं
प्राणादी नपि मरुतो निरुद्ध्य तस्थौ ॥ ४३ ॥

अथवायुमपिनाभुंक्तेत्याह "सौहित्यइति" समहिषः इतिहेतुना वायु मपि आहारार्थं न कल्पयामास इतिकिम् एषवायुः व्यालानां सर्पाणांसौ

हित्यै त्प्तोहेतुः कारणंप्रभवति साव्यालानां स्वभेण दुष्टानां भावस्तत्ता दुष्टते त्यर्थः तपसि सिद्धिदानभवति किंतु सिद्धिनिरोधकर्त्त्रीति परिशेषः इति हेतुनैव सः प्राणादीनप्यांतरीय पंचवायून् निरुध्यसंयम्यतस्थौ योगाधिरूढो ऽभवदित्यर्थः व्यालोदुष्टेगजेसर्पे इतिविश्वः सौहित्यं तर्पणं तृप्तिरित्यमरः प्राणापानसमानोदानव्यानाः पंचवायवः शरीरस्था इत्यमरेणादिपद सा फल्यम् ॥ ४३ ॥

वल्मीकं वपुषि पिपीलिका वितेनु
स्तस्था ऽथो वनहरिणा स्समेत्य कंडुम्।
चंडांशुः करनिकरै स्ससर्ज तापं
कांक्षत्य ज्वलनसखा पपौ रसं च ॥ ४४ ॥

"वल्मीकमिति" तस्यमहिषस्यशरीरे पिपीलिकाः कीटिकाः वल्मीकंवि स्तारितवंतः अथ च वनहरिणाः समेत्यमिलित्वा कंडुं तस्य शरीरे वितेनुः अथ सूर्यः किरणसमूहैः तस्यशरीरे तापन्ददौ तथाज्वलनस्याग्नेः सखावायुः का मितिशब्दंकृत्वा तच्छरीरे योरसस्तंपपौ तच्छरीरंशुष्कं चकार अग्नि मिवत्वा दितिभावः ॥ ४४ ॥

क्षुत्क्षाम स्सततसिरालकाययष्टिः
घोणाग्रं प्रति नितरां निबद्धदृष्टिः।
शारीरं न च बुबुधे स किंचि देव
आभीलं गलितदयो यथा ऽन्यदीयम् ॥ ४५ ॥

"क्षुत्क्षामइति" समहिषः एवं वल्मीक वितानादौसत्यपि शारीरंआभीलं दुःखं किंचिदपिन बुबुधे कथं यथानिर्दयः पुमान् इतरशरीरजन्दुःखं न जा

नाति सदयस्तु परदुःखमपि किंचिज्जानातीत्यतो गलितदयइत्युक्तं कीदृशः महिषः क्षुधयाक्रान्तः तथानिरन्तरंनाडीप्रायकाययष्टिः तथा नासाग्रंप्रति निरन्तरंनिवद्धदृष्टिः ॥ ४५ ॥

तस्यै वं प्रबलतपोऽनलेन शैलो
जज्वाला ऽधिकतर मग्निनेव शुद्धः ।
कृत्वा ऽथो कलकल माकुलं कुलायाद्
उड्डिड्ये शकुनिकुलं दवं विदित्वा ॥ ४६ ॥

"तस्येति" एवं सति तस्यमहिषस्य उत्कृष्टतपोग्निना सशैलः सुमेरुः अग्निनाशुद्धइव अधिकतरंयथास्यात्तथा जज्वाल कांचनस्यहि अग्निनाशुद्धिः अथपक्षिवृन्दं तत्तपोनलं दवानलंज्ञात्वा आकुलंसत् कोलाहलंकृत्वा कुलायात् स्वस्वनीडं त्यक्त्वा उड्डिड्ये उड्डयतेस्म अत्र ल्यब्लोपे पंचमी कोलाहलं कलकलं ति स्त्रांपुंनपुंसकमित्यमरः कुलायोनीड़मस्त्रियामिति च ॥ ४६ ॥

इत्येवं व्रत तपतो ऽयुतं समानां
संपूर्णं सुरमुनिविस्मयप्रदातुः ।
भूयो ऽहं त मभि जगामभक्तितुष्टः
संशुष्कं ह्रद मिव नीरदो निदाघे ॥ ४७ ॥

अथ ब्रह्मातस्यतपोवृत्तमुपसंहरति "इत्येवमिति" व्रतेतिखेदे इत्येवं तपतस्तस्यमहिषस्य समानांवर्षाणां अयुतंदशसहस्रंसंपूर्णं कीदृशस्य देवानां ऋषीणामप्याश्चर्यप्रदस्य भूयः दशसहस्रवर्षांतेअहंब्रह्मा तस्यभक्त्यातुष्टः सन्

तं प्रतिजगाम कंकइव चर्मकालेसंशुष्कंक्कदं मेघइव जगामेतिलिद्युत्तमपुरुषै कवचनं संवत्सरोवत्सरोव्दोहायनोस्त्रीशरत्समा इत्यमरः ॥ ४७ ॥

तस्याग्रे मुदिरगभीरया गिराहं
वेणूना मथ तिरय न्नवाऽनवोचम् ।
उत्तिष्ट प्रहिणु दृशौ मयि प्रसन्ने
ह्यायासा-द्विरम वरं वृणीष्वसौम्य ॥ ४८ ॥

"तस्येति" हेदेवाः अथानंतरं अहंब्रह्मा तस्यमहिषस्याग्रे मेघवद्गंभीरयागिरा वंशानांशब्दान् तिरस्कुर्वन् अवोचंकथितवान् किमितयाह हेसौम्य महिष त्वं उतिष्टस्थिरोभव तथा मयि आसन्ने दृशौ प्रहिणु प्रेषय मांप्रसन्नं पश्येतयर्थः तथा आयासात् तपोरूपश्रमात् विरम अलंकुरु तथा वरंस्वाभीष्टं वृणीष्व वरय घनजीमूतमुदिरेतयाद्यमरः ॥ ४८ ॥

श्रुत्वे दं कथ मपिमां पुरः प्रपश्यन्
आनन्दाप्लुत हृदयो मुहु र्ववन्दे ।
तुष्टाव स्तु तिभि रनाविलाभि राराद्
उत्साहं व्यधित स स्वरं वरीतुम् ॥ ४९ ॥

"श्रुत्वेति" समहिषःकथमपिइंद्रियाणांशैथिल्यात् महतायत्नेनेतयर्थः इदं मद्वचः श्रुत्वा अग्रतश्चमांप्रपश्यन् सन् आनंदेन आप्लुतहृदयोभूत्वा मुहुर्नैकधा ववंदे नमश्चकार अनाविलाभिः निर्मलाभिः स्तुतिभिः मांआरात् समीपे तुष्टाव अथ च संतंशोभनंवरंवरीतुं उत्साहं व्यधित अकृत वरोन्मुखोभूदित्यर्थः आराद्दूरसमीपयोरित्यमरः ॥ ४९ ॥

हे नाथ प्रथितदयोदयोऽस्यऽनाथे
नाथेऽहं वर मत एव मन्मतो यः ।
नो मृत्यो र्भवति जनस्य भी र्यं दन्या
माभून्मे त दिह मृते र्भयं कदाचित् ॥ ५० ॥

किंवव्रेइत्याह "हे नाथेति" हे ब्रह्मन् त्वंअनाथेदीनजने प्रथितः प्रसिद्धः दयायाः उदयोयस्येदृशोसि अतएव मयामतोनिश्चितोयोवरत्स्त्वां नाथयाचे यद्वामननंमत्चित्तं तस्मिन्मतः किंयाचसेइत्याह यत् यस्मात् इहलोके जनस्य मृत्योःअन्या परा भीः भयं नास्तितत्तस्मान्मे मम मृत्योः सकाशात् कदाचिदपि भयंमाभूत् नभवतु सदैवामरः स्यामितिभावः नाथृयाच्ञोपतापयोर्धातु स्तस्ययाच्ञार्थेएवात्मनेपदं मदिति गमादित्वात्क्विपिनलोपः ह्रस्वस्येतितुक् ॥ ५० ॥

प्रत्युक्तिं त मभि ददा वितीरितो हं
नो लंघ्या नियति रियं सुरै र्नरै र्वा ।
किं चाऽहं निजसमये प्रयामि शांतिं
तन्मत्तो वर मपरं वृणीष्व युक्त्या ॥ ५१ ॥

"प्रत्युक्तिमिति" तेनमहिषेण इत्यमुनाप्रकारेण ईरितःकथितोहं तंप्रति प्रत्युक्तिं उत्तरंददौ किमित्याह हेमहिष इयंनियतिः जातस्य हिध्रुवंमृत्यु रितिनियमः सुरैर्नरैर्वा न उल्लंघयितुंशक्या अत्रस्वमेवप्रमाणंदर्शयति किं च अहंब्रह्मापि निजसमये द्विपरार्धसंमितेकाले शांतिंलयंप्रयामि वरदातुरेवा स्थिरत्वेवरादातुः स्थिरताकथंस्यादितिभावः तत्तस्मात् मत्तः मत्सकाशात् युक्त्याएवंमेमृत्युःस्यादितिदायेनअपरंकदापिमेमृत्युर्नस्यादित्यतोऽन्यंवरं वृणीष्व ॥ ५१ ॥

इत्युक्तो मनसि विचार्य्य चारुमेधा
दौर्घट्यं निजनिधनस्य मामऽवादीत् ।
पुंजातिः सुरनररक्षसां तिरश्चां
नो हन्या इह मबला तु का मदग्रे ॥ ५२ ॥

"इत्युक्त इति" सः वरबुद्धिर्महिषः इतिमयोक्तः चित्ते निजमरणस्य दुर्घटतां विचार्य मामुक्तवान् किमित्याह हे ब्रह्मन् सुरनररक्षस्तिर्यग्योनीनांमध्येयः पुंजातिः पुंस्त्वेनोद्देश्यः पुरुषइति यावत् समां न हन्यात् अथच नामत एव अवला वलरहिता स्त्री सा ममाग्रे काऽलं समर्थास्तिनकापीत्यर्थः स्त्रीमांहन्या अपुमानितिवरंवव्रे इतिनिष्कर्षः ॥ ५२ ॥

उक्ताऽहं भवतु तथा पुमांस्तु, कश्चि
न्नो हेतुस्तव निधिने विना वरोरुम्
अंतर्धिं नभसि जगाम तत्समक्षं
कृत्वेव ध्वनि मतुलं महोर्मिरब्धौ ॥ ५३ ॥

"उक्तेति" हे महिष यत्त्वयावृतं तत्तथैवभवतु इदमेवोद्घाटयति वरोरूं स्त्रियंविना कश्चिदपिपुमान् तवमरणे हेतुर्नभविष्यति इति तंप्रति अहमुक्त्वा तस्य समक्षं सम्मुखमेव आकाशेअन्तर्धानंजगाम किं कृत्वाकस्मिन् क इव महांतंध्वनिंकृत्वा अब्धौसमुद्रे महोर्मिर्महावीचिरिव संहतादिवाद्दराडुत्तरोरोरुङ् ॥ ५३ ॥

लब्ध्वा यो वरमपरैरलभ्य मित्थं
तं क्लेशं निजवपुषो जहौ चणेन ।

प्राप्योच्चै र्विजय मनुत्तमं रिपूणां
संग्रामे भट इव देहकंतनाद्यं ॥ ५४ ॥

"लब्ध्वेति" अथमहिषः अपरैः अलभ्यंवरंइत्थंमत्तः लब्ध्वा तं तपोजनितं निजशरीरक्लेशं क्षणेनैव तत्याज शत्रूनांयुद्धे अनुत्तमंविजयं उच्चैः प्राप्य देहकंतना दिक्लेशं शूरइव ।५४।

बलोन्मत्तः सिंहा न् शरभइव सिंहश्च करिणः
करीवोच्चैर्व्याघ्रान् शुनकनिवहान्व्याघ्र इव सः ।
विडालांश्च श्वेव द्रु तमिव विडालश्च चटका
स्तथा जातस्सम्राड् विखलु विजित्याऽखिलनृपान् ॥५५॥

Indira Gandhi National
Centre for the Arts

अथास्य सकलभूपालविजयमाह "बलोन्मत्तइति" समहिषःतथातेनप्रकारेण पृथिव्यां निखिलभूपान् जित्वा सम्राट्खलुजातः चक्रवर्त्तीअभूदित्यर्थः कान् जित्वा कइव बलेनोन्मत्तः शरभः सिंहघातुकतयाप्रसिद्धः पशुविशेषः सिंहा निव तथासिंहः करिणः गजानिव तथाकरी व्याघ्रान् द्वीपिन इव तथा व्याघ्र शुनक निवहान् कुक्कुर समूहानिव तथा शुनकः विडालान्मार्जारानिव तथा विडालः चटकान् कलविंकानिव अत्ररलयोः सावर्ण्याद्बरोन्मत्त इतिमहिषेपि विशेषणीयं अत्रोपमामूलैकावलीनामालंकारः शिखरिणीवृत्तम् रसैरुद्रैश्छिन्ना यमनसलभागः शिखरिणीतिलक्षणात् ॥ ५५ ॥

भूयो यद्यन्निजपुरुबलं दर्शितं तेन नाके
तत्तत्सर्वं त्रिदिवपतयो वेत्य तन्मन्दिरोत्थम् ।

नायंवध्यो मम वरबला त्तु ंभिर प्युच्यतेश
प्रख्यैरेणै र्हरिरिव पुनः का समर्थेह भीरुः ॥ ५६ ॥

"भूयइति" हे देवाः तेनमहिषेण भूयः भूमिजयाऽनंतरं स्वर्गयत् यत् स्वकीयं महद्दलं दर्शितं अदर्शि तत्तत्सर्वमपि यूयंवेत्थ जानीथैव तत्तस्मात् महाख्याअलं मम कथनेन किमित्यर्थः एतत्सर्वमुपसंहरति किमन्यत्भणामि अयंमहिषः मम वरबलात् विष्णुशिव तुल्यैरपि पुरुषैः हननीयः नास्ति कैः कइव एणैः हरिणैः हरिः सिंहइव पुनः भीरुः स्वभावत एव भयशीला स्त्री सा का समर्थाऽस्ति नकापीत्यर्थः एणर्ष्य हरिणाजिनयोनय इत्यमरः ॥ ५६ ॥

तदपि कुरुत यत्नं मन्निदेशेन देवा
नहि हरि रपि शक्तो हन्त्तु मेणांश्शयालुः।
इय मपि वरगाथा लौकिकी भातरलंमा
मपि शतशरदन्ते शर्म जीवंत मेति ॥ ५७ ॥

नन्वेवं सतिकिमस्माभि रेवमेवस्थेय मितिदेवाशयंज्ञात्वाह "तदपीति" हे देवाः एत्रंसत्यपि मन्निदेशेन ममाज्ञया यत्नं कुरुत हियतः हरिः सिंहोपि शयालुः शयनशीलः समीपस्थान ऽ पिमृगान् हंतुं नशक्तः उत्थायैव हंतीत्यर्थः तद्दयूयमपि यत्नंकृत्वैवतं हनिषथेति भावः ननुकिंजानीमो यत्नेकृतेपिसुखं भवष्यति नवेत्याशयं ज्ञात्वात्रैतिह्यं प्रमाणं दर्शयति हे देवाः इयमपिलौकिकी अनिर्दिष्ट प्रवक्तृक प्रवाद पारंपर्य प्राप्तागाथा सांप्रति अलंमनोज्ञा भाति इयंका जीवंतं पुरुषं शतवर्षांतेपि शर्मसुखं एति प्राप्नोत्येव एति जीवित मानं दीनरं वर्षशतादपीत्युक्तेः अतो दुःखिता अपियूयं कदाचित्सुखिनोपि भविष्यथेतिभावः शीलार्थेशीङ स्वेत्यालुच्शयालुः ॥ ५७ ॥

तस्मा त्कामं धाम तत्कामशत्रोः
सर्वे नूनं याम कैलासनाम।
वामावध्यं सूचयित्वा तमादौ
पश्चात् कृत्यं मंत्रयामोऽथ तेन॥ ५८॥

किं यत्नं कुर्मइत्याह "तस्मादिति" तस्माद्धेतोः कामशत्रोः शिवस्य तत् कैलासनाम धाम भवनं प्रति कामंस्वैरं सर्वेपि वयंयाम तत्रकिंकर्त्तव्यमित्याह आदौप्रथमं तस्मै शिवाय तं महिषं वामया वनितया वध्यं सूचयित्वा अथ पश्चाच्च तेनशिवेन सह कृत्यं किं करणीयमितिमंत्रयामः कामः स्मरेच्छयोः कामं वीर्ये काम्यनि कामयोरितिहैमः प्रतीपदर्शिनीवामावनितामहिला तथेत्यमरः "शालिनीवृत्तं" शालिन्युक्ताम्त्रौतगौगोब्धि लोकैरितिलक्षणात्॥ ५८॥

श्रीमा ञ्छम्भो स्वरणसदनीभूत हृच्छंभुनाथो
लक्ष्मीनाथं कविपरिवृढं देशिकोऽसूत यं माम्।
तेनोद्गीते महिषनिधने गीतलक्ष्मीचरित्रे
लक्ष्मीकाव्ये विरतिमगमत्सर्ग एष द्वितीयः॥ ५९॥

श्री मानित्यादिपूर्ववत्स्पष्टम्॥ ५९.

इति श्री मङ्गोस्वामिवंशावतंस-श्रीमच्छंभुनाथात्मजकवि लक्ष्मी नाथ विरचिते लक्ष्मी काव्ये द्वितीयः सर्गः समाप्तः"

इति श्रीलक्ष्मीनाथ कृतायां लक्ष्मीकाव्यव्याख्यायां

*॥ द्वितीयः सर्गः समाप्तः ॥*



ओं नमः श्रिये"

अथ शक्रपुरस्सरा स्सुरा
उररीकृत्य गिरं गिरःपतेः
सह तेन ययुः कृतस्वदा
गुरुणेवांतसदः शिवास्पदम् ॥ १ ॥

ओंनमोविघ्नहर्त्रे अथ तृतीयसर्गे शिवेन सहमंत्रयितुं जिगमिषूणां ब्रह्मादीनां प्रसंगेन कैलासं वर्णयितुं बीजमवतारयति "अथेति" ब्रह्मणः कथनानतरं शक्रपुरस्सराः इंद्रादयः सुराः गिरः सरस्वत्याः पतेर्ब्रह्मणः गिरंवाचं उररीकृत्य अंगीकृत्य तेनब्रह्मणासह शिवस्य आस्पदं स्थानंकैलासं प्रति ययुः कीदृशाः सुराः कृतः स्वदोवेगो यैस्ते केनकेइव गुरुणासह अन्तेसमीपेसीदंतीत्यंतसदः शिष्या इव अत्रकचिदलुक्रात् गिरःपतेरित्येकंपदं अन्यथागिरः पत्युरित्येवंस्यात् असमासे पतिशब्दस्यसखिशब्दवत्त्वात् गिरापतेरितिपाठोवा तेनेतिसहार्थे तृतीया उरर्यूरीचोररीचविस्तारेंगीकृतेत्रयमित्यमरः रंहस्तरसोतुरयस्यद इतिच अस्मिन्सर्गेसुंदरीवृत्तम् विषमेयदिसौततोजगौ युजिसाद्भौलगुरूचसुंदरीति लक्षणात् ॥ १ ॥

ददृशू रजताचलं ततः
शिवपादाङ्कितमंजुलस्थलम् ।
सितयेव हसंत मुच्चकै
र्निकषा स्वर्णगिरिं निजत्विषा ॥ २ ॥

"ददृशुरिति" ततस्तदनंतरं तेदेवाः रजताचलं कैलासंददृशुः कीदृशं शिवस्यपादैः अंकितं चिन्हितं मंजुलंसुंदरंस्थलं यस्य पुनः कीदृशं निकषा

समीपे सितया उज्वलया निजत्विषा स्वशोभया स्वर्णगिरिंसुमेरुं उच्चकै र्यथा स्यात्तथा हसंतमिवेत्युत्प्रेक्षा कविसंप्रदायेहासस्यश्वैत्यात् अत्रनिकषायोगे द्वितोया समयानिकषाशब्दौ सामीप्येत्वव्ययेमताविति हलायुधः ॥ २ ॥

प्रविशंति न यं रवेः करा
निबडछायतरुव्रजाष्टतम् ।
परिचुंबति यः खमण्डलं
शिखरै स्तुङ्गतरै स्वभासुरैः ॥ ३ ॥

"प्रविशंती" इति यंकैलासं रवेः कराः किरणाः न प्रविशंति अत्रहेतुमाह कोदृशं यं निविडाघनाच्छाया येषां तेषां तरूणां वृक्षाणां व्रजे समूहे आवृतं अथ च यः भासनशीलैः उच्चतरैस्वशिखरैः आकाशमंडलं परिचुंबतिइवेत्युत्प्रेक्षा संबंधेपिसंबंधकल्पनात्संबंधातिशयोक्तिरलंकारः ॥ ३ ॥

शिवधाम वदंत्यकोविदा
वसतित्वेन शिवस्य यं जनाः ।
वयमुज्वलताशयात्पुनः
सितशंभो र्मह एव मन्महे ॥ ४ ॥

"शिवधामेति" यंकैलासं अकोविदाः अपंडिता जनाः शिवस्यवसतित्वेन शिवस्यायंवासस्थानमित्यभिप्रायेण शिवधामेतिवदंति शिवस्यधाममंदिरं शिवधामित्यर्थंजानंतीतिभावः तर्हिंकोऽन्योऽर्थोस्तीत्यतः स्वमतमाह वयंतु उज्वलतायाः आशयादभिप्रायात् सितस्य उज्वलस्यशंभोः महः तेज एब मन्महे जानीमहे शिवस्यधामतेजइत्यर्थंजानीमइतिभावः उज्वलस्यहिउज्वलंतेजो

भवति अत्रकैलासे स्वमतिविकासोल्लेखितशिवतेजस्त्वारोपार्थं पराभिमतशिव वसतित्व धर्मस्यापह्नवाच्छुद्धापह्नुतिरियं तदपह्नवस्तु अकोविदवचनोपन्यासेना विष्कृतः शुद्धापह्नुतिरलंकारोयं तदुक्तं शुद्धापह्नुतिरन्यस्यारोपार्थोधर्मनिन्हव इति धामशक्तीप्रभाविचतेजोमंदिरशक्तिष्वितिविश्वः ॥ ४ ॥

क्वचिदन्यभृतैः कुहू कुहू
रितिवाच स्वमदैरुदीरिताः ।
उदिते ऽपि विधावऽमाभिधाः
खलु कुर्वं त्यदृशः स्मरातुरान् ॥ ५ ॥

"क्वचिदिति" यत्र यस्मिन्शैलेक्वचित् समदैः कोकिलैरुदीरिता कुहुकुहु रिति अमावस्याख्याः वाचः चंद्रेउदितेपि स्मरातुरान् जनान् अदृशः अंधान् कुर्वंति कुहुः स्त्रीकोकिलालापेनष्टेंदुकलदर्शयोरिति विश्वः ॥ ५ ॥

पुरुषा इह के स्त्रिय श्च का
न च पंचे षुशरव्यतामिताः ।
इति मानभरा इव श्रुताः
शिखिकेका अपि यत्र दैवतैः ॥ ६ ॥

"पुरुषा इति" यत्रमयूराणांकेकावाचः अपि देवैः इति मानभरा इव श्रुताः इति किं इहशैले पुरुषाः के तथा स्त्रियः काः येयास्व अस्मान् श्रुत्वा पंचेषोः कामस्य शरव्यतां लक्ष्यतां न इताः न प्राप्ताः अत्र केका इति स्वनाम्नैव तासांमानभरत्वंसूचितं केकाइतिपदस्य पृथक्पदेकृते केइतरस्य पुंलिंगे प्रथमा बहुवचनत्वात् काइतरस्यस्त्रीलिंगे च केकावाणीमयूरस्येत्यमरः ॥ ६ ॥

प्रतिकंजसुगंधगृध्नवो
बहु भूभूरितिमंजुगुञ्जितैः
वसुधामिवगंधशालिनी-
मलयो यत्र मुदाह्वयंतिहि ॥ ७ ॥

"प्रोतिद्दति" यत्र भ्रमराः कंजंकंजं प्रति सुगंधमभिलाषुकाः बहुभिः भूभू इति मंजुभिः गुंजितैः गंधवतीं वसुधां भूमिमिव मुदा आह्वयंति आमंत्रयंति भूपदस्य संबोधनेपि भूरितरेवरूपसत्त्वात् उत्प्रेक्षेयं गृध्नुरभिकांक्षायां त्रसिगृधीतिक्नुः ॥ ७ ॥

अपि यत्र शिलासुदूरतो
बहुवेगेन पतञ्झरो रणन्।
विशदैः कणजातबुद्बुदै
र्हसतीवांशुहतेंदुमण्डलम् ॥ ८ ॥

"अपीति" यत्रकैलासे झरः जलप्रवाहः बहुवेगेनअधः स्थितशिलासु पतन् सन् ततश्च रणन् शब्दंकुर्वन् पतनाच्चोत्थितेभ्यः कणेभ्यः जातैर्बुद्बुदैः कृत्वा अंशुभिः किरणैर्हतं चंद्रमंडलंहसतीवेत्युत्प्रेक्षा कीदृशैर्बुद्बुदैः विशदैः श्वेतैः हासोहिश्वेतोभवति अत्रकैलास शिलानांरजतमयत्वात् चंद्रसाम्यं तदुत्थितझर कणानांचांशुभिः साम्यं प्रवाहेनिर्झरोझरइत्यमरः ॥ ८ ॥

अविशंकितदूरनिष्पतज्
झर-झां-कृतरतिरावशंकिताः।

न रवा न्वहु यत्र कुर्वते
खकुलायेषु निलीय पक्षिणः ॥ ९ ॥

"अविशंकितेति" यत्र च पक्षिणः खनीडेषुतिरोभूय शब्दान् वह्नन्कुर्वते अत्रहेतुः कीदृशाः पक्षिणः अविशंकितंनिश्शंकं दूरान्निष्पततः येझराः प्रवाहाः तेषां याः कांक्षतयः तदुत्थितोयोऽतिरावः तेन शंकिताः वह्निति क्रियाविशेषणम् वहुधात्रेतिवापाठः ॥ ९ ॥

मुहु रुड्डुयनैकवृत्तिभि
र्लहरीप्रांत-क-विंदुगृध्नुभिः।
वहुभि र्विहगै र्विभाति य-
स्चिचिकूचीतिवचोभि रुच्चकैः ॥ १० ॥

"मुहुरिति" यः कैलासः वहुभिः पक्षिभिः विभाति कीदृशैः मुहुः पुनः पुनः उड्डयनंविहासोर्ध्वगमनमेवैकावृत्तिर्येषांतैः तथालहरीणां प्रांतेसमीपे यत्कं जलं तद्विंदुगृध्नुभिः अभिलाषुकैः तथाचिचिकूचीतिवचांसियेषांतैः कंशिरः सुख वारिष्वितिहैमः ॥ १० ॥

स्वनितंववििलंविनांऽवुभृत्
पटलेनाऽधिकसांद्ररोचिषा।
शशिभाल इव प्रभाति यो
मदमत्तेभनिकृत्तचर्मणा ॥ ११ ॥

"स्वनितंवेति" यः कैलासःस्वनितंवे मध्य भागे विलंविना मेघपटलेन प्रभाति कीदृशेन अधिकं सांद्रा निविडा रोचिर्दीप्तिर्यस्यतेन केनकइव मदेनमत्तः य

इभः गजः ततो निकृत्तं सद्यश्छिन्नं यत् चर्मतेन खनितंवे कटिपार्श्वात्य भागि विलंबिना शशि-भालः शिवइव शैलस्य श्वैत्यात् शिवेनसाम्यं मेघस्य श्याम लत्वात् गजकृत्तयाच सद्यःकृत्ता गजकृत्तिर्हि सांद्रश्यामदीप्तिर्भवति मद मत्ते ति गजविशेषणं श्यामलताधिक्य प्रतिपादनाय ॥ ११ ॥

यदऽमन्दमरुद्धुतद्रुम
प्रपतत् सूनचयान्सुरांगनाः ।
पदपंकजलास्यलाघवा
दपि भुग्नच्छदनान् न कुर्वते ॥ १२ ॥

"यदिति" यस्यकैलासस्य अमंदेन अनल्पेन मरुतावायुना धुताः कंपिताः येद्रुमाः तेभ्यः प्रपततः सूनचयान् पुष्पसमूहान् सुरांगनाः अप्सरसः चरण कमलनृत्यलाघवेन भुग्नच्छदनान् कुटिलीभूतपत्रानपि न कुर्वंवते अयंभावः अप्सरसस्तचे दृशं नृत्यलाघवं कुर्वन्ति ये नाधःपतित पुष्पसमूहा अपिकुटिल पत्रा न भवन्ति यदिति शब्दनिष्पन्नस्य यस्येति पदस्य, सूनचयैः संबंधः कार्यः लास्यं नृतयं चनर्त्तने इत्यमरः आविद्धं कुटिलं भुग्नमितिच ॥ १२ ॥

यदशोकजनूतलोहित
प्रसवौघच्छुरित श्च यः क्वचित् ।
जतुनेव विभाति रंजितो
विशदे भांति गुणा हि संगताः ॥ १३ ॥

"सदिति" यः शैलः क्वचित् संतः साधवः ये अशोकवृक्षाः तेभ्योजातायेनूत्नाः नवीनाः लोहिताः रक्ताश्च प्रसवानां पुष्पाणांओघः सभूहाः तैः छुरितः विद्धः सन् जतुना लाक्षयेव रंजतो विभाति ह्ययतः विशदे वस्तुनि जने वा गुणाः लोहितादयः मैत्रीमर्यादादयोवा संगताः मिलिताः संतः भांति ॥ १३ ॥

कृतमालतमालमालया
श्रितहिंतालरसालसालया ।
कदलीलवलीनलावली
वलितो यो विलसत्यनाविलम् ॥ १४ ॥

"कृतमालेति" यः शैलः कृतमालानांवृक्षविशेषाणां तथातमालानांच मालयापंक्त्या अनाविलंस्वच्छं यथास्यात्तथा विलसति प्रकाशते कीदृश्या तन्मालया श्रिताः सार्थीकृताः हिंतालाः रसालाः सालाश्च वृक्षविशेषाः यया कीदृशः शैलः कदलीरंभा लवलीति दाक्षिणात्येषु रायआवलीतिभाषया प्रसिद्धा हरफारेवतीत्यन्यदेशभाषया तथा नलानामितिडलयोः सावर्ण्यात् नडानां आवलीभिः पंक्तिभिः वलितः आवृतः एतेवृक्षविशेषाः निघंट्वादौ समीचीनतया वोद्धव्याः अत्रानुप्रासत्वात् डलयोरभेदः तदुक्तं यमकश्लेषचित्रेषु रलयोर्डलयोर्नभिदिति अनुप्रासोऽपियमकप्राय एव ॥ १४ ॥

क्वचि देच्छिषतौषधीगणैः
स्फुरदच्छच्छविभिः प्रदीपवत् ।
पुरतो निशि पार्वतीपतेः
कृतनीराजन मुच्चकै रिव ॥ १५ ॥

"क्वचिदिति" कुत्रचिच्च देवा: तं शैलं निशिरात्रौ प्रदीपवत्स्फुरंतीप्रकाशमाना अच्छानिर्मला च्छविर्दीप्तिर्येषां तै: औषधीगणै: पार्वतीपते: शिवस्य पुरत: अग्रे उच्चै: कृता नीराजना आरात्रिका येनेति तादृशं इव ऐक्षिषत दृष्टवंत: रात्रौहि शैलेषु जाज्वल्यमाना औषध्योदृश्यंते उत्प्रेक्षेयम् ॥ १५ ॥

अपि चारणकिन्नराप्सरो
मुनिगंधर्वकदंबकै स्र्व य: ।
स्तुतिवादननृत्यसंयम
स्वरभेदप्रसितै र्निषेव्यते ॥ १६ ।

"अपीति" यश्चशैल: चारणादीनांकदंबकै: समूहै: निषेव्यते कीदृशै: यथाक्रमं स्तुत्यादिषु प्रसितै: तत्परै: संयम: इंद्रियनिरोध: स्त्रियांतुसंहतिर्वृंदंनिकुरुंबंकदंबकमितयमर: तत्परेप्रसितासक्ताविति च ॥ १६ ॥

विविधैणपतत्त्रलतागृहा
निति कैलास मुदीक्ष्यते मुदा ।
ददृशु स्तपनीयवेदिकां
चतुरस्रां सरसी मिव द्विपा: ॥ १७ ॥

कैलासशोभामुपसंहरन्नाह "विविधेति" विविधानां एणानां हरिणानां पततां पक्षिणां च लतायापंक्तेर्लतानांवल्लीनां वा गृहान् गृहमितयर्थ: तं कैलासं ते देवा: इति पूर्वोक्त प्रकारेण मुदाप्रीतयावीक्ष्य अग्रत: चतुरस्राचतुष्कोणां तपनीयस्यस्वर्णस्यवेदिकां ददृशु: कांकेइव चतुरस्रां सरसींद्विपा इव

अत्रगृहशब्दस्य सदाबहुत्वात् कैलासमितरेकवचनविशेषणत्वेपिनदोषः तथा च अमरसिंहः गृहाः पुंसि च भूम्नेवेति ॥ १७ ॥

वहुरूपमणिप्रसूतया
परितो विस्फुरणैकभावया।
भजते हि यदाभया भयात्
तिमिरं कांचनकांदिशीकताम् ॥ १८ ॥

वेदींवर्णयति "बहुरूपेति" द्वाभ्यां यस्याः वेदिकायाः आभयाशोभयातिमिरं भयात् कांचनकामपि कांदिशीकतां पलायनं भजतिकीदृश्या आभया बहुरूपाः येमणयः तेभ्यः प्रसूतया जातया तयापरितः विस्फुरणमेव एकः भावः स्वभावोयस्याः तया भावः सत्तांस्वभावाभिप्रायचेष्टात्मस्विति विश्वः ॥ १८ ॥

ऋजुवेत्रलसत्करांवुजै
रभितो नंदिपुरस्सरैर्गणैः।
अविशन्सहसा न यां सुरा
भुजगै र्भोगवतीमिवावृताम् ॥ १९ ॥

"ऋजुवेत्रेति" यांवेदीं सुरा अपि सहसा तरसा न अविशन् कुत इतराश्च कीदृशीं ऋजुभिः वेत्रैः शोभमानकरकमलैः नंदिप्रभृतिभिर्गणैः आवृतां कैःका मिव भुजगैः भोगवतींपातालपुरीमिव पुरस्सरपदेन भृंगिचंडादिग्रहः ॥ १८ ॥

तत ईषदवाङ्मुखाम्नया
मुहुरुद्वीक्षितभर्तृवक्त्रया।

गिरिराजतनूजया शिवं
ददृशुश्चन्द्रमिवाऽनुराधया ॥ २० ॥

"तत इति" तदनंतरंगिरिराजस्य हिमालयस्य तनूजया पुत्र्या पार्वत्या सहितंशिवंतेदेवाः ददृशुः कयाकमिव अनुराधया तारया चंद्रमिव कीदृश्यापार्वत्या ईषत् किंचित् अवाक् लज्जया अधोभूतंमुखाब्जंयस्याः तथा मुहुः उद्वीचितंभर्तुः शिवस्य वक्त्रंमुखं यया स्त्रीस्वभाववर्णनात्स्वभावोक्तिः ॥ २० ॥

अघसंहतिकुट्टने पटु
र्जटि कूटावटपेटिकोत्थिता ।
द्विषत्तटिनी विभातियत्
सुललाटे विशदेव वेष्टिनी ॥ २१ ॥

Indira Gandhi National
Centre for the Arts

कीदृशं शिवमित्यपेक्षायां शिवंवर्णयति "अघेति" यस्यशिवस्यशोभने ललाटे दिविषदां देवानां तटिनीनदीगंगा विशदा श्वेता वेष्टिनी उष्णीषेव विभाति कीदृशी पाप समूहच्चोटीकरणे चतुरा तथा जटाजूटेयः अवटः गर्त्तः स एवपेटी ततउत्थिता उष्णीषापि पेट्याएवनिष्क्रास्यशिरसिवेष्ट्यते जटिर्ज्जटेतिद्विरूपकोशाज्जटिशब्दोपि जटापर्यायः ॥ २१ ॥

कमनीयविशालभालगां
कुटिलां चारुकलां कलानिधेः ।
दहनस्य तृतीयदृग्जुषः
प्रशमायेव बिभर्त्ति योऽनिशम् ॥ २२ ॥

"कमनीयेति" यः शिवः कमनीयः अतिसुन्दरो योविशालः भालः तस्मिन् गतां कलानिधेश्चन्द्रस्यचारुकलां अनिशंनिरन्तरं विभर्त्ति अवोत्प्रेचते कस्मै इव तृतीयनेत्रस्थस्याग्नेः लचणयातदुत्थतापस्य प्रशमायेव चन्द्रकलायाः शैत्यात् कीदृशींकलां कुटिलाम् ॥ २२ ॥

अपि सत्त्वरजस्तमोमयं
जननस्थेमविरामकारणम् ।
विधुतिग्मकरा ऽनलात्मकं
त्रितयं यस्य चकास्ति चत्तुषाम् २३

"अपीति" यस्यनेत्राणां त्रितयं प्रकाशते कीं॰ सत्त्वरस्तम इति गुणत्रया त्मकं तथा जन्मस्थितिलयानांहेतु तथा चन्द्रसूर्याग्निरूपं एतदेवंशि वपुराणा दिभ्योनिश्चेतव्यम् ॥ २३ ॥

Indira Gandhi National
Centre for the Arts

किमहिः किं सुता ऽक्षमालिका
मृगनाभिः किमु किं स्थिति र्हरेः ।
इति यस्य गले वितर्क्यते
खलु हालाहलकालिमा बुधैः ॥ २४ ॥

"किमिति" यस्यशिवस्य गलेहालाहलस्य विषस्यकालिमा कृष्णता बुधैः इति एवंवितर्क्यते इतिकिं अयंकालिमा किंअहिः सर्पः सर्पभूषणत्वात् कश्चित्कण्ठे कृष्णसर्पोस्तीतिभावः उतवितर्केकिं अक्षाणांरुद्राक्षाणं मालिकास्ति तस्या अपिशिवभूषणत्वात् कृष्णत्वाच्चयुक्तएवसंशयः अथकिमु मृगनाभिः कस्तूरीअस्ति तस्याअपिकृष्णत्वात् किंवाहरेः कृष्णस्य स्थितिरत्रास्तीतिशेषः

किंत्रष्णनामस्मरणात्कंठेकृष्णताजातेतिभावः कालिमेति लोहितादित्वादिमन् संशयालंकारः ॥ २४ ॥

भुजगावलयो ऽवलंविताः
कुटिलोभूय शिरोमणिप्रभाः ।
भुजगा वलया अनाविले
विलसंती व च यत्कलेवरे ॥ २५ ॥

"भुजगेति" यस्य अनाविलेनिर्मले कलेवरेशरीरे भुजगानां सर्पाणां आवलयः पंक्तयः भुजयोर्गताः सतः वलया इवकटकाइव विलसंति कीदृश्यः कुटिलोभूय अवलंविताः तथाशिरःस्थमणिभिः प्रकृष्टाप्रभा शोभायासांताः कटकाअपिकुटिलाः शिरसि मणिमंतश्चभवंति ॥ २५ ॥

भसितेन च यत्तनूस्तनू
भवताभातिनितांतभास्वता ।
रजिताद्रिमही वपांडुरै
रणुभि श्चारुसरोजरेणुभिः ॥ २६ ॥

"भसितेनेति" यस्यशिवस्य तनूः शरीरं भसितेनभस्मनाभाति कीदृशेन तनूभवता अणूभूतेन तथानितांतभास्वता प्रकाशमानेन दृष्टांतमाह पांडुरैः श्वेतैः अणुभिश्च चारुसरोजस्यरेणुभिः परागैः कैलासभूमिरिव ॥ २६ ॥

करिकृत्तिकृतोत्तरीयतः
चरमाणः किरणोत्करो वहि ।

विलसत्यऽति यस्य सर्वतो
जलदप्रांतत उष्णगो रिव ॥ २७ ॥

"करीति" यस्यशिवस्य गजचर्मणा कृतात् उत्तरीयतः उपरिवाससःवहिः चरमाणेनिस्सरन्सन् किरणोत्करश्चंशुराशिः सर्वतः अति विलसति कस्म त्कस्येव जलदप्रांततः उष्णगोः सूर्यस्येव यथा मेघाच्छादितसूर्यस्य किरणाः मेघप्रांततः सर्वतो वहिर्निस्सरंतः प्रकाशंते तद्वदित्यर्थः ॥ २७ ॥

इति पूर्वसुरप्रतीपदृक्
पुरभेत्तु र्निखिलप्रतीकगा ।
अयणं क्वचिदऽप्रतीतव-
त्यथ तैः पादयुगं प्रतीरिता ॥ २८ ॥

"इतीति" इत्यमुनाप्रकारेण पूर्वसुराणां दैत्यानां प्रतीपाः शत्रवः देवा तेषां दृक्दृष्टिः पुरभेत्तुः शिवस्य निखिलेषु प्रतीकेषु अङ्गेषुगतासती अयणं क्वचिदपि कस्मिंश्चिदंगेपि न प्रतीतवती क्वचिदपि न सम्यक्तस्थावित्यर्थः अथ तैर्देवैः साद्दृष्टिः शिवस्य पादयुगं प्रतिईरिताप्रेरिता पादाविवाश्रितवतीति भावः अंगंप्रतीकोवयवइत्यमरः ॥ २८ ॥

अथ वीक्ष्य शिवोऽपि वेधसं
परितो देवगणैः परीष्टतम् ।
उदतिष्ट दऽतीवसंभ्रमा-
दभिगंतुं हिमगुं यथांऽबुधिः ॥ २९ ॥

"अथेति" अथानन्तरंशिवोपि परितो देवगणैःपरीवृतंब्रह्माणंवीच्य अभि संमुखंगन्तुं अतीवसंभ्रमात् उदतिष्टत् कंकइव हिमगुं चन्द्रं अभिगन्तुं समुद्र इव ॥ २८ ॥

अभितान् क्रममाण ईश्वरो
ऽतिशयस्नेहवशा त्स्खलन्न ऽपि।
मिथ ईक्षणरश्मिसंतति
दृढिमाकृष्टतनु र्न चाऽस्खलत् ॥ ३० ॥

"अभीति" तान् ब्रह्मादीन् प्रतिक्रममाणः पादविक्षेपंकुर्वाणः स ईश्वरः अतिशयस्नेहस्य प्रेम्नः वशात् स्खलन्नपि न अस्खलत् न स्खलितवान् कुतो नास्खलत् इत्याह कीदृशः ईश्वरः मिथः परस्परं याईक्षणानां दृष्टीनां रश्मि संततिः किरणपरंपरा रज्जुपरंपरावा तस्याः योदृढिमादृढत्वं तेन आकृष्टः संयमितः तनुरात्मायस्य सः अन्योपिस्नेहस्य तैलादेर्वशात् स्खलन्नपि रश्मि भिः रज्जुभिः आकृष्टशरीरः सन् न स्खलति स्नेहःप्रेम्णिघृतादिके इति हैमः रश्मिः पुमान्दीधितौसप्तात्पक्ष्मप्रग्रहयोरपीति च ॥ ३० ॥

सकलं जग देकदेशितां
भजतीदं प्रलये यदात्मनि।
न च तत्र ममौ पितामहा-
गमजो नून मऽहो महामहः ॥ ३१ ॥

"सकलमिति" यस्यशिवस्य आत्मनिशरीरे प्रलयकाले इदंसकलमपिजगत् एकदेशितांभजति नतुसर्वशरीरव्यापीत्यर्थः तस्मिन् आत्मनि पितामहस्य ब्रह्म णः आगमनजन्यः महामहः महोत्सवः अहोआश्चर्यं नममौ चतुर्दशभुवनपर्या प्तेवपुषिउत्सवौतर्नममावित्यतिशयोक्तिः मह उद्भवउत्सव इत्यमरः ॥ ३१ ॥

अथ लंवयते करौ विधिः
पतितुं याव द्रुमेशपादयोः।
परिपीड्य हरेण तत्करौ
सुचिरं ताव दरं स सस्वजे ॥ ३२ ॥

"अथेति" अथ यावत् विधिर्ब्रह्मा शिवपादयोः पतितुं करौलंवयते एव तावत् शिवेन तस्यब्रह्मणः करौपरिपीड्य अरंअत्यर्थं सुचिरं सस्वजेआलिं गितः ॥ ३२ ॥

Indira Gandhi National
Centre for the Arts

च्छुरिताच्छनिजच्छवी मिथः
सुतरां प्रेमनिवद्धचेतसौ
परिरब्धकलेवरौ मिथो
ददृशाते स्फुटमेकतां गतौ ॥ ३३ ॥

"च्छुरितेति" तदा तस्मिन्काले तौशिवब्रह्माणौ एकतां एकरूपत्वं प्राप्तौ दृष्टौ देवैरिति शेषः ऐक्येहेतुमाह कीदृशौ मिथः च्छुरिते अच्छेनिर्मले निजे च्छवी दीप्तीययोस्तौ शिवस्यगौरवर्णत्वात् ब्रह्मणोरक्तवर्णत्वात्परस्परंच्छुरित दीप्तित्वादेकरूपताजातेतिभावः तथा सुतरांनिरंतरं मिथः प्रेम्नानिवद्धं चेतो य योस्तौ तथामिथः आलिंगितशरीरौः ॥ ३३ ॥

प्रणतानऽथ देवतागणान्
सुदृशैवा ऽति तरां प्रसादयन्
अभि धाम हरो निनाय तान्
हरिमुख्यानऽतिथीन् गृही यथा ॥ ३४ ॥

"प्रणतानिति" अथहरः प्रणतान् इंद्रमुख्यान् देवगणान् सुदृष्ट्यैव नितरां प्रसादयन् धामनिजमंदिरं प्रतिनिनाय कथं यथा अतिथीन् गृहीगृहस्थः ३४

यदऽधिष्ठितवान् स्वयंभुवा
सह सिंहासनमुच्चकै र्हरः
कनकाऽचलमस्तकस्य भा-
मजयद्भानुविधुश्रितस्य तत् ॥ ३५ ॥

"यदिति" यत्सिंहासनं स्वयंभुवाब्रह्मणा सह हरः उच्चैः अधिष्ठितवान् तत् सिंहासनं भानुविधुभ्यांश्रितस्य सुमेरुशृंगस्यभांदीप्तिं अजयत् अभि भावितवा नित्यर्थः हिरण्मयत्वात्सुमेरुशृंगेन सिंहासनसाम्यं भानुनाच ब्रह्मणः चंद्रेणच शिवस्य ॥ ३५ ॥

परिपृच्छ्य शिवं शिवो विधिं
सकलामर्त्त्यप्रविसारि चारु दृक् ।
तत आगमनप्रयोजने
कृतवान् प्रश्नमुदंचदाननः ॥ ३६ ॥

"परिपृच्छ्येति" शिवः विधिं शिवंकल्याणं परिपृच्छ्य ततः सकलेषुअमर्त्येषु देवेषु विसारिणी प्रसरणशीलादृक् यस्य सः सर्वान्देवान्पश्यन्नित्यर्थः आगमन प्रयोजनेप्रश्नंकृतवान् किमर्थंयूयमागताइतिपृष्टवान् कीदृशः शिवः उदंचत् प्रकाशमानं आननंमुखंयस्यपृच्छतेर्द्विकर्मकत्वात्कर्मद्वयं शिवो मोक्षे महादेवे कीलकग्रहयोगयोः सुखे क्षेमे जले क्लीबमितिविश्वः ॥ ३६ ॥

इति तैर्नतकंधरैः सुरैः
परिपृष्टे मदनारिणा स्वयम् ।
वदनं परमेष्टिनोऽथ तन्
महसा मुद्रितवाग्भिरीक्षितम् ॥ ३७ ॥

"इतीति" तैर्नम्रग्रीवैः सुरैः इति मदनारिणाशिवेन स्वयंयदापरिपृष्टैः तदा तस्यशिवस्य महसातेजसा मुद्रिताः मूकीभूताः वाचोयेषांतैः परमेष्टिनः ब्रह्मणः वदनंमुखं ईक्षितंदृष्टं त्वमेवोत्तरंदेहि नवयंशक्ताइतिदर्शनाभिप्रायः ॥ ३७ ॥

द्रुहिणोऽप्यनुभूय नाकिनां
अकिनां भावमथो पिनाकिनम्
प्रतिवल्गुमना मनाक्पदां
बहुलार्थां समुपाददे गिरम् ॥ ३८ ॥

"द्रुहिणोपीति" ब्रह्मापितेषां अकिनां दुःखिनां देवानां भावं दर्शनाभिप्रायं अनुभूय पिनाकिनंशिवंप्रति वल्गुमनाः सन् गिरंवाचं समुपाददे कीदृशीं मनाक् ईषत्पदानि यस्या तथो बहुलोऽर्थोयस्यांतां ॥ ३८ ॥

भजते मनसा सहैत्य नो
त्वयि गुंफोऽपि गिरां सकुण्ठताम् ।
श्रुतयोऽपि भयेव नेतिने-
त्यनुलापान्वहुधा प्रकुर्वते ॥ ३९ ॥

संप्रति स्वाशयंविज्ञापयितुं तावत्तंस्वरूपतटस्थलक्षणाभ्यां प्रतिपादयं स्तौति "भजतेइति" हे शिव गिरांवाचां गुंफोरचनाविशेषोपि त्वयिविषये मनसा सहनैत्य न प्राप्य कुंठतां निश्शक्तितांभजते यतोवाचोनिवर्त्तंतेअप्राप्यमनसा सहेतिश्रुते: ननुसत्यंज्ञानमनंतंब्रह्मेत्यादिश्रुतिभि: कथंविषयीक्रियते इत्याह श्रुतयोपि भियाभयेनेव नेतिनेति अथातआदेशोनेतिनेति नेहनानाऽस्ति किंचनेति अनुलापान् मुहुर्भाषा: वहुधावहुविधान् प्रकुर्वते तदुक्तं महिम्नस्तवे अतीत:पंथानं तव च महिमा वाङ्मनसयोरतद्व्यावृत्त्यायं चकितमभिधत्ते श्रुतिरपीति अन्योविभयत्रस्त: नेतिनेतिवदति अतएव भयेपुनरुक्ति: अनुलापोमुहुर्भाषेत्यमर: ॥ ३९ ॥

न च यत्र विभातिभानुमान्
न तडिन्नो डुपति: कुतोऽनल: ।
स्वय मेव विभासि भासय-
स्यखिलां भासुरसंहतिं पुन: ॥ ४० ॥

स्वयं प्रकाशतांप्रकाशयति "नचेति" यत्रत्वयि भानुमान् सूर्यो न विभाति तथा तडित् विद्युदपि न विभाति तथाउडूनां नक्षत्राणां पति श्चंद्रोपि न विभाति तर्हिअनल:अग्नि कुत:प्रकाशयेत् अथच हेशिव त्वं स्वयमेव विभासि प्रकाशसे पुनश्च अखिलानामपि भासनशीलानां सूर्यादीनां संहतिं समुदायं भासयसि

प्रकाशयसि अयमर्थः तव महाप्रकाशात्मकत्वात्त्वमेव विश्वंभासयसि नत्वांकोपि भासयितुमलमिति उडुपतीत्यनेन उडूनामपिग्रहणं तथा च श्रुतिः नतत्रसूर्यो भातिनचंद्रतारकं नेमाविद्युतोभांति कुतोयमग्निः तमेव भांतमनुभातिसर्वं तस्य भासा सर्वमिदं विभातीति ॥ ४० ॥

त्वमऽसि प्रकृतेः परः पुमान्
परिपूर्णप्रथितप्रथामयः ।
महिमा तव कालदिक्प्रभृ-
त्यपरिच्छिन्नतनु विराजते ॥ ४१ ॥

"त्वमसीति" हे शिव त्वंप्रकृतेः त्रिगुणमयान्मूलकारणात् परः पुमान् सांख्यप्रतिपाद्यपुरुषोसि तदुक्तंविद्वगनचंद्रिकायां विश्वसद्मनिशिवात्मनीश्वरे पूरणात्पुरुषतामुपेयुषि येमनः प्राणिदधुर्महर्षयस्तान् पतंजलिमुखानुपास्महे इति पुरुषएवेदंसर्वमितिश्रुतिः कीदृशस्त्वं परिपूर्णाविश्वविषयिणीप्रथिता विश्वविषयितयाप्रसिद्धेत्यर्थः याप्रथा ज्ञप्तिर्ज्ञानमितियावत् तन्मयःतद्रूपः सर्वज्ञ इत्यर्थःतवसर्वज्ञत्वात्त्वमेव सर्वान्बोधयितुमर्हसि नत्वांकोपि बोधयितुमलमित्यर्थः अथ च तवमहिमामहत्वं कालदिक् प्रभृतिभ्यः कालदेशवस्तुभ्यइत्यर्थः अपरिच्छिन्नापरिच्छेदरहिता तनुरात्मायस्यतादृशः सन् विराजते सर्वोपरिवरीवर्त्तते नित्यत्वात्कालपरिच्छेदशून्यत्वं विभुत्वाद्देशपरिच्छेदशून्यत्वं सर्वात्मकत्वाद्वस्तुपरिच्छेदशून्यत्वं वेदाहमजरंपुराणं सर्वात्मानंसर्वगतंविभुत्वादिति श्रुतिः ४१॥

तव देव सिसृक्षतः पुनः
स्वमनस्कारलवोद्गमो हि सः ।

परिणाम मितस्तरङ्गवत्
प्रकृतित्वेन पयोनिधे र्विभो ॥ ४२ ॥

एवंस्वरूपलक्षणमुक्त्वा संप्रति तटस्थलक्षणमाह "तवेति" हे देव विश्वरच नाक्रीडाव्यवहारपर पुनस्तदनंतरंसिसृक्षतः स्रष्टुमिच्छतस्तव स एव एकोहं वहुस्यामितिसिसृक्षारूपः स्वमनस्कारस्य चित्ताभोगस्य लवः लेशः तस्यउद्गमः उत्थानं प्रकृतित्वेन प्रकृत्यात्मकतया परिणामं इतः प्राप्तः परिणामोनाम उपा दानसमसत्ताकोऽन्यथाभावः अत एव तुल्यंदृष्टांतमाह पयोनिधिः समुद्रस्यतरंग वत् यथासमुद्रोत्थितस्तरंगः समुद्रसत्तामपि नत्यजति अन्यथा च भवति मनसः कारः व्यापारविशेषः मनस्कारः चित्ताभोगोमनस्कार इत्यमरः ॥ ४२ ॥

तव सन्निधिमात्रतः पुनः
सृजतीदं त्रिगुणं जडा ऽपि सा
खलु चुंवकसन्निधानत :
चलनं-तत्क्षणतोऽयसो भवेत् ॥ ४३ ॥

तस्याः कार्यमाह "तवेति" साप्रकृतिर्जडापि तवचैतन्यात्मनः सन्निधिमा त्रतः नतुसंगतइतिमात्रपदेनवुध्यते असंगोह्ययं पुरुषइतिश्रुतेः पुनः आदौत्रिगु णं सत्वरजस्तमइतिगुणत्रयात्मकं इदंजगत्सृजति अजामेकां लोहितशुक्लकृष्णां वह्वीः प्रजाः सृजमानां नमाम इतिश्रुतेः ननुजडायाः सृष्टिव्यापारः कथंसंजा घटीति न च तवचैतन्यात्मनः सन्निधिमात्रतइतिपूर्वमुक्तमेवेतिवाच्यं चैतन्यसं निधेर्जडसत्रव्यापारदर्शनात् अन्यथाजीवतः संनिधेः शवस्यापि गतिवचनादि कंस्यादित्याशंकानिराकरणायदृष्टांतमाह खल्विति लोकप्रसिद्धमेवैतत् चुंवकम णिसन्निधानतः संनिधिमात्रतएव जडस्यापि अयसः लोहस्य तत्क्षणतएवचल नंभवेत् अतोनिश्चयंचैतन्यसंनिधेर्जडव्यापारइति ॥ ४३ ॥

अथ सन्निहितस्य ते तया
त्रिगुणस्याऽपि गुणित्व मिष्यते
सुरपादपपुष्पसंनिधेः
स्फटिकस्य स्फुटशोणिमा यथा ॥ ४४ ॥

नकेवलं तूक्तंसंनिधेः तस्यामेव तूक्तरूपचैतन्यापत्तिः किंतुसंनिधेरुभयाश्रितत्वात्तत्संनिधेस्तत्तद्रूपस्यत्रिगुणस्यतूव्यप्यभिनिवेश इत्याह "अथेति" अथानतरं तया त्रिगुणमय्याप्रकृत्या सन्निहितस्यसन्निधिंभजतः तेतव त्रिगुणस्यत्रिगुणविरहितस्यापि गुणित्वंसगुणत्वं इष्यते अध्यासयते नतुवस्तुतइत्यर्थः अतएवदृष्टांतमाह यथासुरपादपस्यअशोकस्य पुष्पसंनिधेः विशदस्यापि स्फटिकस्य स्फुटःप्रकटएव शोणिमारक्तत्वं भाति वस्तुतस्तु न कालत्रयेपि तत्र रक्तत्वसंभवः किंतूपाधिकृतएवेतिभावः तथोक्तंप्रबोधचंद्रोदये स्फटिकमणिवच्छास्यान्देवः प्रगाढमनार्यया विकृतिमनया नीतः कामप्यसंगतविक्रियः नखलुतदुपश्लेषादस्यव्यपैतिरुचिर्मनाक् प्रभवतितथाप्येषा गाढंविधातुमधोरतामिति ॥ ४४ ॥

तव दक्षभुजादहं पुरा
जनितः सव्यभुजा च्चतुर्भुजः
मम मस्तकतस्त्वदंशजो
हर आविर्भवनं चकार सः ॥ ४५ ॥

एवं सगुणत्वे प्रतिपादिते तस्माद्वा एतस्मादात्मन आकाशः संभूत आकाशाद्वायुरित्यादिश्रुतिभिःसाधारण्येनाकाशाद्यं तर्वर्त्ति ब्रह्माद्यऽखिलजगदुदानत्वे च स्वयमेव ज्ञाते तत्र विशेषतोपि स्वंप्रतिविष्णुं प्रतिचोपादानतां स्मारयति "तवेति" हे शिव पुरासृष्ट्यादौतवदक्षभुजात् अहं ब्रह्मा जनित

सव्याद्वामाङ्गाच्च चतुर्भुजः विष्णुर्जनितः तथाचलिंगपुराणे ब्रह्मविष्णुप्रतिशिव वाक्यं अयंमेदक्षिणे पार्श्वेब्रह्मालोकपितामहः वामपार्श्वे च मेविष्णुर्विश्वात्मा हृदयोद्भव इति ननु पुराणेभ्यः श्रूयते ब्रह्मणोमस्तकाच्छिवोजात इति किं वैप रीत्यमुच्यते अतआह सत्यमेतत् सहरः मम मस्तकतएव आविर्भवनं प्रादुर्भावं चकार नतुजातइत्यर्थः प्रादुर्भावोहि सत एव जायते यथादोहनेन गोषु पयसः कोदृशोहरः त्वदंशाज्जातः नतुसोपिसाक्षात्त्वमित्यर्थः मदनुग्रहाय मम मस्तक तोंशेनावतीर्णोसोतिभावः इदमपि यथेतिहासं शिवपुराणादवगंतव्यम् ॥ ४५ ॥

त इमे परवंत एव ते
जननादीनि विधेम सर्वदा ।
न वयं स्वय मीश्महे कदा
रहिताः सूत्रभृते व पुत्रिकाः ॥ ४६ ॥

ननु मयेवरचिताः संतुयूयंसृष्ट्याद्यर्थं ततःकुरुतसृष्ट्यादिकं स्वस्वव्यापारं किंमयेति शंकानिरासायाह "तइति" ते इमे वयं ब्रह्मविष्णुहराः तेतव परवंतः पराधीनाएव जननस्थितिनिधनानिक्रमेण सर्वदाविधेमकुर्मः विपक्षेवाधकमा ह स्वयं त्वामनाश्रित्यतु ओष्टपुटविभागमपि कर्त्तुं न कदापि ईश्महे न सम र्थाः दृष्टांतमाह सूत्रभृता लोहसूत्रधारेण शैलूषेण रहिताः पुत्रिकाः सालभं जिका इव यथा जडाअपि सालभंजिकाःसूत्रभृताप्रेरिताःसचैतन्याइव स्वस्वव्या पारंकुर्वंति तेनरहितास्तुजडाएव स्यात्पुत्रिकापुत्तलिका दुहित्रो रिति मेदिनी ॥ ४६ ॥

भगव ञ्जगतां मनोगतं
निखिलं वेद यतोऽसि सर्ववित् ।
परिपृच्छसि नो मुहु र्यंत
स्तदिदं भाति विभो विडंवनम् ॥ ४७ ॥

संप्रति प्रस्तुतमाह "भगवन्निति" हेभगवन् त्वं जगतां मनोगतं निखिल मपि वेत्सि यतस्त्वं सर्ववित् सर्वज्ञोसि यःसर्वज्ञःससर्वविदितिश्रुतेः हेविभो व्यापक एवं भूतोपि यतः मुहुर्मुहुः नः अस्मान् अल्पज्ञवत्कुशलादिकं परि पृच्छसि तदिदंतव विडंवनमेव भाति अत्र भगवच्छब्देनापि सर्वज्ञत्वंसूचितं तदुक्तं उत्पत्तिं च विनाशं च भूतानामागतिं गतिं वेत्तिविद्यामविद्यां च स वाच्यो भगवानिति जगतामिति वहुवचनं भूतभविष्यद्वर्त्तमानभेदे नोक्तम् ॥ ४७ ॥

अथवा भगवन् भवा न् चे
त्परिपृच्छेत्कुशलादिकं तु नः।
अपरो ननु को गृहागतान्
वहुमंतुं महतः समर्चयेत् ॥ ४८ ॥

तर्हि ममायोग्यतापत्ति रितिशंकामऽपहर्तुमाह "अथवेति" हे भगवन् अथवापक्षांतरेचेद्यदि भवान् नः अस्मदादीन् गृहागतान् सर्वज्ञोपिसन् शिष्टाचारतया कुशलादिकं न परिपृच्छेत् तर्हि अपरः इतरोजनः गृहा गतान् महतः सत्पुरुषान् वहुमन्तुम् वहुमानंकर्तुं कः समर्चयेत् न कोपी त्यर्थः मत्सदाचारंदृष्ट्वा लोकोप्येवं कुर्यादित्याशयात्ते सदाचरणम् नत्वल्पज्ञ वदितिभावः तदुक्तं श्रीभगवद्गीतासु यद्यदाचरति श्रेष्ठस्तत्तदेवेतरोजनः सयत्प्रमाणं कुरुतेलोकस्तदनुवर्तते इति ॥ ४८ ॥

स्वय मेव मया कृतं तु य
त्तदिदं श्रावयितुं समुत्सहे।
मुखरीकुरुते प्रविश्यमे
हृदयं य न्मृड देववेदना ॥ ४९ ॥

पूर्वमनुपपद्यमान मुत्तरदानं संप्रति युक्त्योपपाद्य किमर्थमागता इत्य स्योत्तरमाह "स्वयमिति" हेशिव स्वयमेव मया पूर्वंयदपकृत्यं कृतं तदिदं वक्ष्यमाणं त्वां श्रावयितुं समुत्सहे ननुअर्थनाशं मनस्तापं गृहे दुश्चरितानिच वं चनंचापकृत्यंच मतिमान्न प्रकाशयेदिति शिष्टैर्निषिद्धत्वात्कथं स्वापकृत्यं प्रकाश्यते इत्याह हेमृड यद्यस्माद्धेतोः देवानां वेदनापीडा ममहृदयं प्रविश्य मां मुखरीकुरुते वाचालंकरोति देवपीडामसहमानएव प्रकटीकरोमि नत्वन्यथे तिभावः मृडयति सुखयतिमृडः इतिनिर्वचनात्त्वमेव देवपीडां निराकर्त्तुमलं नान्यइत्यन्यं प्रति प्रार्थनानिषेध सूचकं विशेषणम् ॥ ४८ ॥

महिषोऽस्ति महापराक्रमो
गणनीयो धुरि यो दुरात्मनाम्।
तपसा परितोष्य तेन मां
प्रमदातो स्मृति रोंकृता पुरा ॥ ५० ॥

किंत्वयापकृतमित्यतआह "महिषइति" हेशिव महिषोनाम दैत्योऽस्ति कीदृशः महापराक्रमः यः महिषः दुरात्मनां धुरिगणनीयः यदायदादुरात्मनां गणनाक्रियते तदातदा समहिषोऽति दुरात्मत्वादग्रेगण्यते इत्यर्थः ननुीदृ क्प्रभावः कथंजातइत्यत आह पुरापूर्वंतेन महिषेण मां ब्रह्माणं तपसा परितो ष्य प्रमदातः स्त्रोसकाशात्स्मृतिः ओंकृता अंगीकृता प्रमदैवमांहन्यान्न पुमा निति तेन वृत्तमित्यर्थः इयमेवस्वापकृतिरितिभावः ओं प्रणवेंगी कृतौ रोषे इति विश्वः ॥ ५० ॥

स विजित्य जगतत्रधीश्वरान्
पुन रिंद्रं त्रिदिवाधिपत्यजूः

कृतकृत्य इवेश नित्यशो
इह्यपि मृत्यो र्गतभीः शमऽश्नुते ॥ ५१ ॥

"सइति" हे ईश समहिषः जगत्याः पृथिव्याः ईश्वरान् भूपान् विजित्य पुनस्तदनंतरं इन्द्रं च विजित्य नित्यशः नित्यमेव कृतकृतयइव शंसुखं अश्नुते भुनक्ति कीदृशः त्रिदिवस्यस्वर्गस्य आधिपत्यं जुषतीतिसः तथामृत्योरपि गतादूरी भूता भीर्भयं यस्यसः ॥ ५१ ॥

सुख मिंद्रमुखा मखाऽशिनो
न जुषंते समरा त्पराङ्मुखाः
महिषप्रहता मुहु र्मुहु
र्मुमुहु र्यत् स्वमहोभि रुज्झिताः ॥ ५२ ॥

"सुखमिति" इंद्रमुखाः मखाशिनः देवाः तस्यसमरात् युद्धात् पराङ्मुखाः पलायिताः सुखं नजुषंते नसेवंते नन्विंद्रादयोमहाबलाः कथंपलायिताइत्याह यत्यस्मात् रणे महिषेणप्रहताः संतः मुहुर्मुहुः स्वतेजोभिस्त्यक्ताः मुमुहुर्मूर्छांप्रापुः ॥ ५२ ॥

करुणावरुणालयं वयं
तदमी त्वां शरणं समागताः
हरिणा इव वारणार्दिता
हरिणेंद्रं पुरतः सटा जुषम् ॥ ५३ ॥

"करुणेति" तत्तस्मात् अमीवयंदेवाः करुणावरुणालयं दयासमुद्रं त्वां शरणं

समागता: कंकेइव वारणेनगजेन अर्दिताः पीडिताः हरिणाः हरिणेंद्रं सिंहं पुरतः अग्रेइव की० सिंहंसटाजुषं केसरवंतं त्वांचजटावंतं इत्यर्थः व्रतिनस्तुज टासटेत्यमरः ॥ ५३ ॥

निखिलं खलु वेद यद्भवा
नल मुक्त्वा तदतः समाप्यते
परिपाहि यथाकथं श्रितान्
जनकः स्वांस्तनयानिवौरसान् ॥ ५४ ॥

"निखिलमिति" हेशिव यत्यस्मात् भवान् निखिलंवेत्ति तत् अलमुक्त्वा अन्यन्नवक्तव्यमित्यर्थः अतोस्मात् समाप्यतेउपरम्यते किंबहुना यथाकथं येनके नाऽपिप्रकारेण श्रितान् परिपाहि रक्षकान् कइव स्वान् औरसान् तनयान् जनकइव पितेव अलंखल्वोः प्रतिषेधे क्त्वा अलमुक्त्वेति ॥ ५४ ॥

इति वाच मुदीर्य धैर्यवा
नमराम्रे डितसाधुसाधुवाक्
स्फुरदोष्टपुटेऽथ वाङ्मुखे
सति शंभौ विरराम विश्वसृक् ॥ ५५ ॥

"इतीति" सविश्वसृक् ब्रह्मा धैर्यवान् इतिवाचमुक्त्वा विरराम कीदृशः अम रैः आम्रेडिता द्विरुक्ता साधुसाध्वितिवाक् यस्यसः साधूक्तमिति देवैरुक्त इत्यर्थःक्वसति शंभौवाङ्मुखे वाचंगदितुमुन्मुखेसति अतएवस्फुरत् ओष्टपुटोयस्य वक्तुमुन्मुखस्य ओष्टः स्फुरति आम्रेडितंद्विरुक्तमित्यमरः ॥ ५५ ॥

अथ देवगणा महेशितुः
प्रतिवक्तु वंदनेच्छणोत्सुकाः
अपत निव दातु रऽर्थिनः
सहसाऽग्रस्थमुपर्युप र्यरम् ॥ ५६ ॥

"अथेति" अथानंतरंप्रतिवक्तुः उत्तरंदातुःशिवस्य मुखदर्शनोत्सुकाः कथंगदिष्यतीत्युत्सुकाः देवगणाः सहसाशीघ्रं स्वस्मादग्रेस्थितंदेवं उपरि उपरि अपतन् कस्यकइव दातुः अर्थिनइव यथादानकर्त्तुर्मुखदर्शनोत्सुकाः याचकाः अग्रस्थं याचकमुपर्युपरि पतंति तद्वदित्यर्थः अत्रोपर्युपरियोगेद्वितीया तदुक्तं अभिसर्वतसोःकार्याधिगुपर्यादिषुत्रिषु द्वितीयाम्रेडितांतेषु ततो न्यत्रापिदृश्यतेइति ॥ ५६ ॥

अथ वाचमुवाच शङ्करः
श्रृणु धात वरमेत मन्यथा
अपिकर्तुमहं न शक्नुया
मलिकस्था मिव ते परांलिपिम् ॥ ५७ ॥

"अथेति" अथशिवः वाचमुवाच हेधातः मह चः श्रुणु किमित्याह एतंत्वया दत्तंवरं अन्यथाकर्तुंअहमपि नशक्नुयां पुरुषादपितस्यमृत्युः स्यादितिकर्तुं नसमर्थोस्मीतिभावः कामिव अलिकस्थां सर्वजनललाटलिखितां तवपरांलिपि मिव यथाललाटस्थाविधातुर्लिपिर्नशक्यतेऽन्यथाकर्तुं तथावरोपीत्यर्थः ललाट मलिकंगोधिरित्यमरः ॥ ५७ ॥

अवला वद का वलीयसी
मम वा ते ह्यथवा रमापतेः

सह तेन रणे भवेदऽलं
रणनाम्नोऽपि भयं विभर्त्तियाः ॥ ५८ ॥

स्यादेतत् पुमान्न हन्यात् तर्हि काचिद्बलवतीप्रमदैव विचिंत्यतामित्याह "अवलेति" हेब्रह्मन् वदकथय इहलोके साका अवला नामतएववलहीना स्त्रीवलीयसी वलिष्ठास्ति या तेनमहिषेण रणे अलंसमर्थास्यात् या च स्त्रीरणस्य नाममात्रतएव भयंविभर्ति तर्हि कास्त्रैर्युद्धकरणवार्त्ता विशेषतस्त्वस्माकमेव स्त्रियउत्कृष्टागण्यंते नचतासामपि शक्तिरितग्राह ममअवला पार्वती तव च सरस्वती रमापते विश्नोश्चलक्ष्मीरपि किंसमर्था नेत्यर्थः ॥ ५८ ॥

अहह सह महोभि र्लुंठितं नाकराज्यं
सममऽपि सुखपुंजै र्निर्जितं रत्नजातम् ।
अपि सह मखभागैरंगना स्तेन भुक्ता
वत तव वरदाना त्सर्वैदृन्दा रकाणाम् ॥ ५९ ॥

अथतत्कृत्येपश्चात्तापंकरोति "अहहेति" खेदेहे ब्रह्मन् तेनमहिषेण तववरदानात् सर्वदेवानांतेजोभिः सह स्वर्गराज्यं लुंठितंचोरितं तथा तेन तेषां सुखपुंजैः समंसह रत्नजातंनिर्जितं ऐरावतादीनि सर्वाण्यपि रत्नानि जितानीत्यर्थः तथा तेषां यज्ञभागैः सह अङ्गनाः अप्सरसः भुक्ताः यज्ञभागा भुक्ताः अभ्यवहृताः अप्सरसश्च भुक्ताः रत्याद्दूषिता इत्यर्थः सहोक्तिरलंकारः अहहेत्यद्भुतेखेदे इति हैमः ॥ ५९ ॥

पटीयानस्त्रे तत्प्रति हतिविधौ कैटभरिपुः
पुरा तेनेदृग्वाः परिमितिविहीना विनिहताः ।

अतः सर्वे यातुं प्रयतत विकुंठं प्रतिसुरा
मुरारि र्यत्रास्ते जलधितनयालिङ्गिततनुः ॥ ६० ॥

अथ किं व्यतीतस्यशोकेन संप्रत्युपायः कथ्यतामितितदाशयंबुद्धाह "पटीयानिति" एतस्यदुःखस्यप्रतीकारविधाने विष्णुरेवपटीयान् अतिचतुरोस्ति यतस्तेनविष्णुना पुराईदृशाः महिषसदृशाः अपरिमिताः असंख्याताः विनिहताः अतः अस्मात्कारणात् सर्वेपि यूयंदेवाः विकुंठंप्रतियातुं प्रयतत यत्नं कुरुत यत्रविकुंठे मुरारिः आस्तेआसोनोस्तिकीदृशः जलधितनयया लक्ष्म्या आलिंगितातनुर्यस्य सः एतेनस्वाभीष्टसिद्धिः सूचिता मुदितोहिसर्वंसंपादयति यद्वाशक्त्याविनातस्यवरदानादावशक्तत्वाल्लक्ष्मीशक्तिता सूचिता तदुक्तंमानसोल्लासे येपिब्रह्मादयोदेवाभक्तेभ्योवरदायिनः त्वद्भ्रूगांशक्तिमादायभवंति च वरप्रदा इति कैटभरिपुमुरारीति विशेषणद्वयंपुरातेनेदृशावहवोहता इति वाक्यसाफल्याय अयमिवदृश्यते इतोदृशाः इतिष्टक् सक्रोचोपमाने कार्यं इति सक्पचे रूपम् इदम् शब्दस्यचेशादेशः ॥ ६० ॥

श्रीमां शम्भो श्चरणसदनीभूतहृच्छंभुनाथो
लक्ष्मीनाथं कविपरिवृढं देशको सूतयं माम् ।
तेनोक्तौते महिषनिधने गीतलक्ष्मीचरित्रे
लक्ष्मीकाव्ये विरतिमगमत्सर्ग एषोऽग्नितुल्यः ६१ ॥

श्री मानित्यादि पूर्ववत्स्पष्टम् अग्नितुल्यस्तृतीय इत्यर्थः दक्षिणाग्निगार्हपत्याहवनीयास्त्रयोग्नय इत्यमरोक्तेः ॥ ६१ ॥

इति तृतीयः सर्गः ॥ ३ ॥

इति श्री मद्गोस्वामिवंशावतं स श्री मच्छंभुनाथात्मजलक्ष्मीनाथ विरचि
तायां लक्ष्मीकाव्य व्याख्यायां

* तृतीयः सर्गः समाप्तः *






---

अथ महेशवचः प्रतिपद्य ते
विधिबलंवितमंजुकरांबुजम्।
ययु रयाय विधाय तमग्रणीं
नगनिकेतनकेतनविष्टपम् ॥ १ ॥

ॐ नमो विघ्नहर्त्रे अस्मिन्सर्गेविकुंठलोकगमनंवर्णयिष्यते "अथेति" अथा नंतरंतेदेवाः महेशस्यवचः विकुंठगमनोपदेशरूपं प्रतिपद्यप्राप्य तमेवमहेशं अग्रणीं विधाय नगेषुवृत्तेषुनिके तनंगृहंयस्य सः पक्षीगरुढ़ः सः केतनेध्वजेयस्य विष्णोः विष्टपंभुवनंविकुंठाख्यं प्रति ययुः यातुमिच्छां च क्रुरित्यर्थः कस्मैप्रयो जनाय अयाय शुभावहविधये कीदृशं तं महेशं विधिनाब्रह्मणाअवलंवितं आश्रितं मंजुसुंदरंकरांबुजंयस्यतं वष्टिभागुरिरल्लोपमवाप्योरित्यल्लोपः अयः शुभावहोविधिरित्यमरः केतनंध्वजमस्त्रियामिति च अस्मिन्सर्गे नचतदीयेति यावद्द्रुतविलंवितवृत्तम् द्रुतविलंवितमाहनभौभराविति लक्षणात् अंतयमका लंकारश्च ॥ १ ॥

शिखरिकूटसमुच्छ्रितपीवरे
ककुदि वेल्लितसुंदरकंधरम्।
रसनया परिमृष्टतनुं मुहुः
सुधवलं धवलंपटचेतसम् ॥ २ ॥

"शिखरीति" युग्मं तावद्द्वितीयपद्योत्तरार्धव्याख्या अथशिवः स्वयंवृषभं आरुरुहे किं कुर्वन् तं वृषभं शिवकरेण सुखकरेण हस्तेन परिस्पृशन् कीदृशं वृषभं ककुदिग्रीवोपर्युच्छ्रितांगविशेषे वेल्लिता कुटिलीकृता सुंदरा कंधराग्रीवा येनतं कीदृशेककुदि शिखरिकूटवत् पर्वतशृंगवत् समुच्छ्रिते तुंगे पीवरेस्थूले

ष पुनः की० वृषभं रसनयाजिह्वया परिमृष्टालीढातनुर्येन तथा सुधवलं गौर वर्णं तथा धवेभर्त्त रिशिविलंपटंचेतोयस्यतं ॥ २ ॥

तनुरुहावलिवेपथुतर्ज्जिता-
ऽप्रकटदंशचयं वरकंबलम् ।
वृषभ मारुरुहेऽथ शिवः स्वयं
शिवकरेण करेण परिस्पृशन् ॥ ३ ॥

पुनः कीदृशं "तन्विति" तनुरुहावलेः रोमपंक्तेः वेपथुनाकंपेन तर्जिताः तिरस्कृताः अप्रकटानां सूक्ष्माणां दंशाना अल्पमाक्षिकाजातीनां चयाः समूहा येन तं तथावरः श्रेष्ठः कंवलः सास्ना यस्यतंककुद्मत्ककुदः श्रेष्ठवृषांगेराज्यल क्षणोति विश्वः कंवलोनागराजेस्यात्सास्नाप्रावारयोर पीति च वेल्लितंकुटिलं भुग्नमित्यमरः अथवेपथुः कंप इति च अत्रवृषभस्वभाव वर्णनात्स्वभावोक्तिः ३ ।

अथ कथा विविधा विधि रूचिवान्
पथिजखेदहरा हर सुद्दिशन् ।
निजजनस्य दरः कतिधा नु किं
न भवता भवतापहृता हृत :॥ ४ ॥

"अथेति" अथवृषारोहणानंतरं ब्रह्माशिवमुद्दिश्य मार्गजन्यखेदनाश काः वहुविधाः कथाः ऊचिवान् तासुकाश्चिदाह हे शिव निजजनस्यस्वभक्त स्यदरः भयं कतिधा अनेकविधः भवतापहृता संसारतापत्रयनाशकेन भवता

त्वया किं न हृतः हृतएवेत्यर्थः यदायदा स्वभक्तस्य भयंजातं तदातदा त्वया नाशितमेवेत्यर्थः ॥ ४ ॥

प्रमथनाथ पुरा ऽम्बुधिमंथने
प्रपिबता सकलं हि हलाहलम् ।
कृत महो भवतैव तदा ऽवनं
दिविषदां विषदारितचेतसाम् ॥ ५ ॥

ननुकदाहृत इत्यत आह "प्रमथनाथेति" हे शिव पूर्वंसमुद्रमंथनकाले तदुत्थितं सकलमपि हलाहलं विषंपिबताभवतैव अहो आश्चर्यं तदाविषेण दारितचेतसांदिविषदां देवानां अवनं रक्षणं कृतंनान्येन ॥ ५ ॥

विशदशोणसितेतर सुच्चकैः
स्ववशनीतजगत्त्रितयं विभो ।
निजजनस्य गुणत्रयवद् द्रुतं
त्रयम ऽदाहि पुरां हि पुरा त्वया ॥ ६ ॥

"विशदेति" हे शिव पुरा त्वयैवपुरांनगराणांत्रयं त्रिपुरमित्यर्थः स्वभक्तस्य गुणत्रयवत् अदाहिदाहितं कोदृशंपुरत्रयंगुणत्रयं च एकं विशदं रजतमयत्वात् श्वेतंसत्त्वगुणमपि निर्मलत्वाच्छुक्लं द्वितोयंतुशोणंतसस्वर्णमयत्वाद्रक्तं रजोऽपि रागात्मकत्वाद्रक्तं तृतोयंतु सितेतरं लोहमयत्वात्कृष्णं तमोप्यावरणात्मकत्वात्कृष्णं कीं० उभयं स्ववशेनोतंजगतांत्रितयंयेनतत् तदुक्तं लिंगपुराणे कांचनंदिवितत्रासोदंतरिक्षेचराजतं भुविलोहमयंचासीत्पुरंतेषां महात्मनामिति ॥ ६ ॥

भगवता प्यऽवनं क्रियते सदा
त्रिजगतां भवते व गदाभृता।
बहुविधान्विनिहत्य निशाचरान्
सदवतारवता रणमण्डले ॥ ७ ॥

"भगवतेति" भगवता गदाभृताविष्णुनापि भवतेवत्वयैव त्रिजगतां अवनं रक्षणं क्रियते किं कृत्वा युद्धमंडले बहुविधान् शंखासुरादीन् राक्षसान् हत्वा संतः शोभनाः मत्स्यादयोऽवताराः यस्यतेन ॥ ७ ॥

इति युवां जगतां परिरक्षणा-
नवरतव्रतधारणपारणाम्।
क्षयपयोदजलै रपि तर्क्यते
स्वय मिनौ यमिनौ न करिष्यथः ॥ ८ ॥

"इतीति" अमुनाप्रकारेणयुवां विष्णुहरौ जगतां परिरक्षण रूपनिरंतर व्रतस्य यद्धारणं तस्यांगभूतामपिपारणां क्षयस्यकल्पां तस्ययेपयोदाः पुष्करावर्तकादयोमेघाः तेषांजलैरपि न करिष्यथः इतितर्क्यतेविचार्यते प्रलयकालेपि जगद्रक्षाव्रतत्यागं न करिष्यथः तस्मिन्कालेपिस्वांतः प्रवेशनादिति भावः नन्वेवंविधेदुःखेकेनचित्प्रेरिता वावांनेत्याह कीदृशौयुवां स्वयमिनौ कर्तुमकर्तुमन्यथा कर्तुं च स्वयंप्रभूइत्यर्थः नन्वेवंचेतर्हि किं न स्वेच्छयातद्व्रतंत्यजाव इत्यत आह यमिनौ नियमवंतौ अङ्गीकृतपरिपालकावित्यर्थः ॥ ८ ॥

जय जयेश शिवे त्व ऽनुलोपिनी
दिविषदाम ऽथ संहति रुच्छ्रतोः।

अनु ययौ नभ सीव भसंहति
हिमगभस्तिगभस्तिमतो स्तयोः ॥ ९ ॥

"जयेति" अथ देवानांसंहतिः हे ईश हे शिव त्वं जय जय इति उच्चकै मुहुर्भाषणशीलासती तयोः शिवब्रह्मणोः ऋच्छतोर्गच्छतोः सतोः अनुपश्चात् ययौ कयोः केव आकाशे चंद्रसूर्ययोर्गच्छतोः पश्चात्तारासंहतिरिव अभूतोपमेयम् ॥ ९ ॥

तत उदञ्चितपञ्चम उच्चकैः
परभृतैः समदैः समुदीरितः।
श्रुतिरसायन मध्वरभोजिभिः
सुमधुरध्वनि रध्वनि शुश्रुवे ॥ १० ॥

"ततइति" तदनंतरं विकुंठलोकासन्नैः अध्वरंयज्ञं भोक्तुं शीलंयेषांतैर्देवैः अध्वनिमार्गे अतिशयेनमधुरः ध्वनिः शुश्रुवे श्रुतः कीदृशोध्वनिः मदसंहितैः परभृतैः कोकिलैः समुदीरितः उच्चारितः तथा उच्चकैः उदंचितः प्रकाशितः पंचमः स्वरोयत्र सः तथा श्रुत्योः कर्णयोः रसायनमिव सुखदत्वात् पंचमस्थान प्राप्तत्वात्पंचमः स्वरः तदुक्तं वायुः समुद्गतोनाभेरुरोहृत्कंठमूर्धसु विचरन्पंचमस्थान प्राप्तत्वात्पंचमउच्यते इति अन्यच्च पुष्पसाधारणे काले कोकिलारौति पंचममिति अनेन सर्वदैव तत्र बसंतऋतुरित्यपि सूचितम् ॥ १० ॥

सरलसालरसालतमालता-
बलवल्लीकदलीवकुलालिभिः।
परिवृते विविशुस्त्रिदिवेश्वरा
उपवने पवनेरितनीरजे ॥ ११ ॥

"सरलेति" अथ देवाः विकुंठलोकस्य उपवने आराममेविविशुः कीदृशे पवनेनईरितानि आंदोलितानिनीरजानि कमलानि यस्मिन् तथा सरलादीनां वृक्षविशेषाणां आलिभिः पंक्तिभिः परिवृते ॥ ११ ॥

विकचपुष्पसुगंध मनुत्तमं
ह्यपि यतः परिगृह्य समीरणः ।
मुकुलगर्भगसौरभलोभत
श्चलति मंदम ऽमंदमदप्रदः ॥ १२ ॥

उपवनमेववर्णयति "विकचेति" यतः उपवनात् समीरणोवायुः अत्युत्तमं प्रफुल्लपुष्पसुगंधं परिगृह्यापि मुकुलानांअप्रफुल्लपुष्पाणां गर्भेउदरे गतस्यसौरभस्यसुगंधित्वस्यलोभतइव मंदंमंदंचलति कीदृशोवायुः अमंदंअनल्पं मदं ददातीति तादृशः अन्योपिलुब्धः वहिर्धनंप्राप्यापि गूढधनवांछया मंदंमंदं चलति ॥ १२ ॥

मणिमयीषु महीषु महीयसा
प्रतिकृते विरहा न्महसा द्रुमाः ।
ददृशिरे त्रिदशै रप्यतप्रभाः
स्वसदृशः सदृशः कुसुमैः स्फुटैः ॥ १३ ॥

"मणीति" यत्रोपवने त्रिदशैः देवैः मणिमयीषु मणिभिः रचितासु महीषु भूमिषु जाताः द्रुमाः मणिजन्येन च महीयसा अतिमहता महसातेजसा करणेन तेषां प्रतिकृतेः च्छायायाः विरहात् अभावात् स्वसदृशाः निजतुल्याः ददृशिरेदृष्टाः देवाहिच्छायाविहीनाभवंति अन्यदपिदेवतुल्यतायांकारणमाह

कीदृशाः द्रुमः अमृतं जलं प्रकर्षेणपिबंतीतितादृशाः देवा अपिअमृतंपीयूषं पिबंतीतिश्लेषेणतुल्यतातथास्फुटैः प्रफुल्लैः कुसुमैः सदृशः दृग्भिः सहिताः प्रफुल्लानिपुष्पाख्येवतेषांनेत्राणीत्यर्थः देवा अपि अनिमिषदृशोभवंतिइतितुल्यता प्रतिच्छायाप्रतिकृतिरित्यमरः अमृतं यज्ञशेषेस्यात्पीयूषेसलिले घृतेइति विश्वः प्रफुल्लोत्फुल्लसंफुल्लव्याकोशविकचस्फुटा इत्यमरः ॥ १३ ॥

सरससारसहंस परिष्कृतं सरसिजालिसमुल्लसदिन्दिरम्।
मुमुदिरे च्छमुदीक्ष्य सरः सुरा स्तलतिरोहित
रोहित मद्गुरम् ॥ १४ ॥

"सरसेति" यत्रोपवने देवाः अच्छंनिर्मलंसरोवीक्ष्य मुमुदिरे कीदृशैः सरसैः रसिकैः सारसैः पुष्कराह्वैः हंसैश्चपरिष्कृतं अलंकृतं तथासरसिजालिभिः कमल पंक्तिभिः समुल्लसंती इन्दिरालक्ष्मीर्यस्य तथातलेतिरोहिताः पिहिताः रोहिताः मद्गुराश्चकषविशेषायस्मिन् तत् रोहितोमद्गुरः शाल इतिझषभेदेष्वमरः ॥ १४ ॥

कुररकीर समीरणभोजिभुक् पिकचकोरकिकीदिविकोकगीः
सपदि यत्र जहार विकृष्य सा सुमनसां मनसा
सहिताः श्रुतीः ॥ १५ ॥

"कुररेति" यत्रोपवने कुरराः उत्क्रोशाः कीराः शुकाः समीरणंवायुंभोक्तुं शीलंयेषांतान् सर्पान् भुंजतेतेमयूराः पिकाः कोकिलाः चकोराः प्रसिद्धाः किकीदिवयः चाषाः कोकाश्चक्रवाकाः एषांपक्षिणांगोर्वाक् सुमनसां देवानां मनसासहिताः श्रुतीः स्वंप्रतिसपदिशीघ्रं विकृष्यजहार अतिमनोहरत्वादि तिभावः ॥ १५ ॥

अथ समीक्ष्य पुरंद्रुहिणो हरेर्नियतमुष्टिकृतजूकृततर्जनी।
पुर मिदं हि सुरांसमदर्शय त्स बुबुधे विबुधैरपिचक्रिणः १६।

"अथेति" अथोपवनदर्शनानन्तरं द्रुहिणः ब्रह्मा हरेः पुरंविकुण्ठं समीक्ष्य दृष्ट्वा नियतोबद्धोमुष्टिर्येन तथाऋजूकृता सरलीकृता तर्जनी अंगुष्ठपार्श्ववर्त्ति नी अंगुलिर्येन तथाविधः सन् सुरान्प्रति इदं पुरमित्येताबन्मात्र मेवांगुल्या-

निर्दिश्यादर्शयत् नतुहरेः पुरमितिहरेरपिनामोच्चरितवान् तदाविबुधैर्देवैरपि चक्रिणः चक्रधारिणः विष्णोः पुरमिदमिति तर्जनी सरलीकरणाभिनयादेव बुबुधेज्ञातं इदंवक्ष्यतिदर्शन कालेहि मुष्टिं बद्ध्वातर्जनीं च सरलीकृत्यदर्श्यते तथैव च चक्रमपि धार्यते अतएवचक्रिणइत्युक्तम् ऋजूकृततर्जनीत्यत्रईदृदं तस्य द्युवस्थान भिन्नस्योप सर्जनत्वेपि श्लोकार्थं वक्तव्यमित्युक्तेः पुंकार्याभावः ।१६।

पतति नासु मुपेत्य पुनर्जनो ध्रुति जनुस्सलिले भववारिधौ।
वदति यत्र मुदा परिदोलनै रिति निकेतन केतनसंहतिः १७

विकुण्ठमेववर्णयति "पततोति" यत्र विकुंठे निकेतनेषु गृहेषु केतनानां ध्वजानां संहतिः मुदा परिदोलनैः वायुना इतस्ततः कंपनैः इतिवदतीत्यु-त्प्रेक्षा इति किं अमुं लोकं कश्चिदपि जनः उपेत्य प्राप्य भववारिधौ संसार समुद्रे पुनर्नपतति कीदृशे मरण जन्म रूपाणि जलानि यस्मिन् अन्योपि नि-षेधं कुर्वन् शिरः कंपयति तदुक्तंश्रीगीतासु आब्रह्मभुवनाल्लोकाः पुनरावर्त्ति-नोर्जुन मामुपेत्यतुकौंतेय पुनर्जन्म न विद्यते इति ॥ १७ ॥

धृत रथाङ्गसरोजगदांबुजा विलसदाप्रपदीनवन स्रजः।
अभिनवांबुदमंजुलकान्तयः कमलयाऽमलयाश्रितवक्षसः १८

धृतेत्यादियुग्मं तावद्द्वितीयपद्योत्तरार्धव्याख्या अत्र विकुंठे नैकेबहवः नतुसर्वे केपोतिवापाठः पुरौकसः पुरवासिनः आत्मनाशरीरेण हरितांविष्णुतां साद्दृश्यमुक्ति मित्यर्थः दधति बिभ्रति विष्णुतामेवप्रतिपादयति कीदृशः हरि तालेन समानि पीतानि अंशुकानि वासांसि येषांते तथा धृतानि रथांगानि चक्राणि सरोजानि पद्मानि गदाः कौमोदक्याख्या अंबुजाः शंखाश्चयैस्ते तथा विलसत्यः आप्रपदीनाः पादाग्रपर्यंतंलंबमानाः वनस्रजः वनमालायेषांते तथा अभिनवोयोंबुदः मेघस्तद्वन्मंदराः कांतयोदीप्तयोयेषां तथा अमलया कमलया लक्ष्म्याश्रितंवक्षोयेषांते ॥ १८ ॥

सरसिजोदरसोदरसद्दृशो मुकुटकुण्डलमण्डनमण्डिताः।
दधतिनैकपुरौकस आत्मनाऽत्र हरितां हरितालसमांशुकाः१९

तथासरसिजं कमलं तदुदरस्यगर्भस्यसोदर्यस्समाना: शोभनाङ्घ्रयोयषा तथा मुकुटकुण्डलादिभिर्मण्डनैर्भूषणै: मंडिता भूषिता: स्यात्त्रिष्वाप्रपदीनं तत्प्राप्नोत्याप्रपदंच्छियदित्यमर: आपादपद्मयामालावनमालेति सामतेतिक लिंग: ॥ १९ ॥

युग्मं न च तदीयतुला क्वचिदस्ति
य त्तदुपमित्यति कुण्ठित बुद्धिभि: ।
इति य आजुहुवे त्रिदिवाधिपै
रपि विकुण्ठ विकुण्ठसमो ह्यसि ॥ २० ॥

"नचेति"य: लोक: देवैरिति आजुहुवे आमंत्रित:इतिकिं अयीतिकोमला मंत्रणे हेविकुण्ठ त्वंविकुण्ठेनैवसमस्तुल्योसि त्वत्सदृशो पमानांतरा भावात्त्वयित्वस्मिन्नेवोपमानोपमेयभावोस्तीतिभाव: एतदेवाह कोदृशैर्देवै: यत् यस्मात्तस्यविकुण्ठस्य सम्बंधिनोतुलासादृश्यंक्वचिदप्यन्यत्रनास्तीत्यत: उपमादातु अतिशयेन कुण्ठितानिश्शक्तीभूताबुद्धियेषांतै: अत्र च विशेषेण अतिशयेन कुंठयति उपमादातुर्बुद्धिमितिस्वैच्छिक निर्मितनिर्वचनादप्युपमानांतरव्यवच्छेदोध्वनित: अनुपमोविकुण्ठलोकोस्तीतिनिष्कर्ष: ॥ २० ॥

नापन्नं विषमदशां विधे र्न विघ्नं ना
नूर्जस्विन मपि वर्चसा न हीनम् ।
यत्रेन्द्रप्रमुखमखाशिनो विनास्वं
नो रूपोज्झित मवलोकयांबभूवु: ॥ २१ ॥

"नेति" यत्रविकुण्ठे इन्द्रादयो देवा: किमपि तत्रतत्र विषमदशां कष्टदशां आपन्नं प्राप्तं नअवलोकयांबभूवु: न ददृशु: तथाविधेर्दैवस्य निघ्नं अधीनं न ददृशु: शुभाशुभकर्मणामभावात् तथा अनूर्जस्विनं बलहीनमपि न ददृशु: तथावर्चसातेजसापिहीनं न ददृशु: तथा रूपेण सौंदर्येणापि उज्झितं रहितं न ददृशु: परंतुस्वं आत्मानंविना आत्मानमेव विषमदशादिविशिष्टं तत्रददृशुर्नेतत्त्वमित्यर्थ: तथा च विषमदशांमहिषापकारजन्यां प्राप्तं त्रिदशलाद्दा-

विषमदशा विशिष्टत्वं श्लेषेणबोध्यं विषम शरवत् तथाविधैर्दुरदृष्टस्य ब्रह्मणो वा अधोनं तथा तदपेक्षया बलहीनं तथैवतेजोहीनं सौंदर्यरहितं च स्वात्मानमेव दृष्टशूर्नततत्यमित्यर्थः ॥ २१ ॥

यत्र च सुरुचिविज्वलिताशाश्छिद्रहीनहृदयाः खलु मुक्ताः ।
मंदिरेषु खचिता वररीत्या निर्गुणा अपि
विभांति गुणाढ्याः ॥ २२ ॥

"यत्रेति" यत्रविकुंठे वररीत्या आवलीरीत्यामंदिरेषु खचिताः मुक्ताः मौक्तिकानि निर्गुणाः सूत्ररहिता अपिगुणाढ्याः सूत्रप्रोताइवभान्ति आवलीरीत्या खचितत्वात् कीदृश्यः मुक्ताः स्वरुच्यानिजदीप्त्या विज्वलिताः आशाः दिशायाभिस्ताः तथाच्छिद्रेणरंध्रेण हीनं हृदयं अन्तर्यासांतानिश्छिद्रा इत्यर्थः अथवा यत्रविकुंठे मुक्ताः सारूप्यादि मुक्तिं प्राप्ता जनाः स्वस्वमंदिरेषु खचितत्वात् निर्गुणाः सत्वादिगुणत्रयरहिता अपिवहिर्दृष्या गुणाढ्याः सगुणा इव भांति कीदृशाः स्वरुचिप्रकाशित दिशः तेजोमयत्वात् यद्वा स्वरुच्यास्वाभिलाषयाविज्वलिताः प्रकाशिताः आशाः मनोरथायेषांते यद्यद्वांछंति तत्र तत्तदेवाप्नुवन्तीतिभावः तथाच्छिद्रैर्दोषैः हीनं हृदयंयेषांते रुचिर्दीप्तौ च शोभायामभिषंगाभिलाषयोरिति विश्वः आशाककुभितृष्णायामिति च छिद्रंविवररंध्रवत् गर्त्तेदोषेइतिहैमः गुणोमौर्व्याम प्रधाने सत्वादौ सूत्रइन्द्रिये इति च २२

विचित्ररत्नैर्घटितासु यत्र तुल्याकृतीनां पथिका वलीनां ।
रथ्यासुतथ्यं परितः प्रयाणेकोवेदविंवप्रतिविंब भेदम् ॥ २३ ॥

"विचित्रेति" यत्रविकुंठे बहुविधरत्नैर्घटितासुरथ्यासु विशिखासु प्रतिविंबेन तुल्याकाराणां पांथपंक्तीनां परितः प्रयाणे सर्वतोगमनकाले विंवस्य प्रतिविंवस्य च भेदंतथ्यं यथावत्को वेद को जानाति विंवप्रतिविंवयोर्गमनाद्यत्यादिना तुल्यत्वात् अयंविंवः अयं च प्रतिविंव इति यत्र न बुध्यते इत्यर्थः ॥ २३ ॥

जाड्यं यत्र सरस्सु कुंतलचयेकौटिल्य मुद्वीक्ष्यते
भ्रांतिर्लंपटता च भार्त्यलिकुले श्वेताश्ममय्याः कचाः ।

नाभौ यत्र मृगीदृशांहि वलयोऽभावः सदातामसो
रथ्यायच सकर्दमामलयजैः कौचंपयोदुर्लभम् ॥ २४ ॥

"जाड्यमिति" यत्र विकुण्ठे जाड्यंशैत्यं परस्मैव उद्गीय्यते नत्वन्येषु जाड्यं मूर्खतास्तीत्यन्यव्यवच्छेदोऽर्थादध्यते तथा यत्र पुंसांकेशसमूहेएव कौटिल्यंवोच्यते नतुमनस्सु तथायच भ्रांतिर्भ्रमणं लंपटता च भ्रमरसमूहेएव भाति नत्वन्येषु भ्रांतिश्चित्तास्थैर्यं लंपटता च पदार्थेषु भाति तथा यत्र चमर्या एवकशाः श्वेताः संति नत्वन्येषां जराया ऽभावात् तथा यत्र मृगोदृशां स्त्रीणां नाभावेववलयः संति नतुमुखादिषु तथायत्रतामसः तमः संबंधी सदा अभावाः अत्यन्ताभावोवर्तते नान्यस्य सर्वार्थसंपन्नत्वात् तथा यत्र रथ्याः विशिखाः मलयजैः चन्दनैरेवसकर्दमाः सपंका संति नतुरजोमिश्रित जलादिभिः यथा यत्र कौचं कुचजन्यं पयः चीरमेवपुनर्जन्माभावात् दुर्लभमस्ति नत्वन्यत् परिसंख्यालंकारः परिसंख्यानिषिध्यैकमेकस्मिन्वस्तुयंत्रणं सेहचयः प्रदीपेषुनस्नांतेषुनतभ्रुवामितिलचणात् एतावानत्र भेदः लच्येशाब्दोनिषेधः अत्रत्वार्थं इति ॥ २४ ॥

इति मधुरिपुलोकं नाशितास्तोकशोकं
त ममृत मिवमूर्त्तं वीच्य नाकौकसस्ते ।
अथ घटित मनर्घैः रत्नजातै र्हि निन्यु
भवन मवनिभर्त्तुर्दृश्यता मुज्वलश्रि ॥ २५ ॥

"इतीति" अमुनाप्रकारेण ते देवाः नष्टीकृतानल्पशोकं तंविष्णुलोकं मूर्त्तंमूर्तिधरं परिछिन्नमितियावत् अमृतंमोक्ष मिवदृष्ट्वा अथअमूल्यैः रत्न जातैः रचितं वराहाद्यवतारैरनं तावतारेण वा अवनिं भूमिं बिभर्त्तीति तस्य विष्णोर्भवनं मंदिरं दृश्यतांनिन्युः ददृशुरित्यर्थः कीदृशंउज्वलाश्रोः शोभायस्यतत् स्त्रोकाल्पचुल्लका इत्यमरः ॥ २५ ॥

कीदृग्व,द्विर्घटयितु रदः कैरुपायै रचिंत्यैः
किं वा रत्नैः स्वय मिह समेत्या वलो भूयते स्म ।

यन्निर्माणं प्रति लवनवं चिन्तय न्विश्वकर्मा
मायानूह्या खलु मधुरिपो श्चेतसेति व्यरंसीत् ॥ २६ ॥

"तदेववर्णयति" कीदृगिति यस्यभवनस्यनिर्माणं रचनांदिवमध्येस्थित: विश्वकर्माचिंतयन् सन् चेतसाइतिमत्वाव्यरंसीत् विरराम इति किं खलु निश्चये मधुरिपोर्विष्णोर्मायाअनूह्या अतर्क्यास्ति अघटनघटनापटीयस्यामाय यैवास्यघटनासंभवेनान्यथेति भाव: कीदृशं निर्माणलवंलवंलेशंलेशं प्रति नवंकिंचिंतयन्नित्याह अद: भवनं घटयितु: निर्मातु: बुद्धि: कीदृक् कीदृशी आसीत् अथ च स: निर्माता कै: उपायैर्निर्मितिसाधनै: आदौभवन मघटयत् कीदृशै: अचिन्त्यै: ये मयापि न चिन्त्यंते अथवाअस्यनिर्मातेव कोपिनास्ति किन्तु रत्नै: स्वयमेव इहसमेत्यपरस्परंमिलित्वा आवलीभूयते स्म यंत्रीभूतं निखिलशिल्पकला कुशलोपि विश्वकर्मायंवीक्ष्य चकितो भूत्तर्हिकाऽन्येषां वार्त्तेतिभाव: ॥ १६ ॥

चरण मिव यदीयं भाति लग्ना समंतान्नि
खिलनिलयपंक्ति र्वीक्षितुं यस्य चाऽग्रम्।
कुटिल तरशिरोधि र्दूर सुद्भ्रांतदृष्टि:
करसुधृतकिरीटा देवतालि र्बभूव ॥ २७ ॥

अस्योच्छ्रायंवर्णयति "चरणमिति" यस्यभवनस्यसमंतात् सर्वापीतरा भवन पंक्ति: चरणमिवलग्नाभाति सर्वेभ्योप्यत्युच्छ्रितत्वात् अथ च यस्य भवनस्य अग्रंवीक्षितुं कियद्दूरमस्याग्रमिति द्रष्टुं देवपंक्ति: अतिकुटिलग्रीवा तथा दूरपर्यंतं उत् ऊर्ध्वंभ्रांता नतुप्राप्ता दृष्टिर्यस्या: तथा पतनाशंकया करै: सुदृढंधृता: किरीटा: मुकुटाययेताद्दशीबभूवद्दक्पथातीताग्रंभवनमित्यर्थ: २४

अथ जयविजयौ द्वौ संस्थितौ द्वारि दृष्ट्वा
धृतमणिमययष्टी विष्णुना संनियुक्तौ।
विजय सुरजयाया हूय देवालि रूचे
गणयति हि सदार्त्त: शाकुनं तारतम्यम् ॥ २८ ॥

"अथेति" भवन शोभादर्शनानन्तरं देवपंक्तिः भवनस्यद्वारिजय विजयाख्यौ द्वारपालौदृष्ट्वा कीदृशौ विष्णुना द्वाररक्षार्थसंस्थापितौ तथा धृते मणिमयेयष्टीयाभ्यांतौ तयोर्मध्ये विजयमेवाह्वय वक्ष्यमानंऊचे जयं कस्मा-न्नाजुहावेत्यत आह कस्मै भद्रजयाय विशेषेणजयोविजय इत्यर्थ त्वात् यतः आर्त्त दुःखितः जनः सदैव शाकुनंतारतम्यं गणयति जयाह्वाने केवलं जयो भविष्यति विजयाह्वानेतु विशेषेणेति शकुनस्यतारतम्यंतैर्विचारितमिति भावः ॥ २८ ॥

अयि विजयपतिं प्रति प्रयातु निजचरणेहि निधीयतां प्रयासः
इति विबुधशिरस्स्वनुग्रहस्ते कथय समेत्य च नो
हरिं दिदृक्षून् ॥ २९ ॥

किमूचे इत्यत आह "अयीति" हे विजय पतिं विष्णुं प्रतिप्रयातु त्वया निजचरणे एव प्रयासं श्रमोनिधीयतां स्थाप्यतां त्वयैवगम्यतामिति भावः ननुमेकासिद्धिर्भवितेत्यत आहुः इत्ययंगमनरूपः अनुग्रहः तवदेव शिरस्सु भविष्यति अथतत्र गत्वा किं विधेय मित्यत आहुः नः अस्मान् शिवादिदेवान् समेत्यमिलित्वो हरिं प्रति द्रष्टुमिच्छून् कथय त्वद्दर्शनार्थिनो देवा आगता इति कथय ॥ २९ ॥

अथो निदेशं परिगृह्यनाकिनां विलंघ्य कक्ष्या बहुशो रयान्वितः
जगाम सो तर्विजयो सुरद्विषं मुदा समाचष्ट
समागतान्सुरान् ॥ ३० ॥

"अथोदिति" अथानंतरं स विजयः देवानां आज्ञां गृहीत्वा अथ च बहुशः कक्ष्याः विलंघ्य वेगयुक्तः सन् अन्तर्जगाम अथ गत्वा सुरद्विषं विष्णुं प्रति समागतान् सुरान् मुदासमाचष्ट ॥ ३० ॥

नारायणोऽपि शिवधात्रसुखान्समेतो
नाकर्ण्य तूर्णतर मुत्सवपूर्णगात्रः ।

आघूर्णमाननयनो हृदि देवहृन्दं
प्राघूर्णिकीकृत मथे चिंतवानृक्षणं सः ॥ ३१ ॥

"नारायणोपीति" विष्णुरपिशिवधातृमुखान् सुरान् समेतान् आकर्ण्य शीघ्र तरं उत्सवेनपूर्णशरीरः अभूत् अथ च स विष्णुः किं चित्मोलितनेत्रः सन् देवहृन्दंहृदिप्राघूर्णिकीकृतं अतिथीकृतं क्षणमात्रं ईचिंतवान् प्राघूर्णिकः प्राघणिक इत्यमरः ॥ ३१ ॥

कुत्र कुत्र वद नाथ नाथ हे पृष्ट इत्यबलयापिनैकधा ।
सम्भ्रमान्न ददुत्तरं च तां निस्ससार बहिराशु शार्ङ्गभृत् ३२

"कुत्रेति" अथ शार्ङ्गभृत् विष्णुः अबलयालक्ष्म्या हे नाथ हे नाथ कुत्र कुत्र गम्यते इति वद इत्यनेकवारंपृष्टोति संभ्रमात् तांप्रतिउत्तरं न ददत् सन् शीघ्रंवहिर्निस्ससार विरक्तानांजनादीनां च शतुर्नम्नेति ददत् ॥ ३२ ॥

असुरभि सुमनःकदंबकंतत् हृदि विकचंचबहिःसमीक्ष्यतावत्
मधुहृदुरुमुदं समुच्छ्रयंतो मथ शबलीकृतवाञ्शुचा
ऽपि पश्चात् ॥ ३३ ॥

"असुरभीति" यथामधुपुष्परसंहरतीतिमधुहृत् भ्रमरः सुमनसांकर्णिकारादि पुष्पाणांकदंवकंहृन्दं तावत् आदौ बहिर्वाह्ये विकचं प्रफुल्लंसमीक्ष्य पश्चात् हृदिअन्तश्च असुरभिसुरभिरहितं वीक्ष्य अनुभूय आदौसमुच्छ्रयंतीं उपचीयमानांमुदंप्रीतिं पश्चात् शुचाशोकेनशबली करोति मिश्रितां करोति तथा मधुंदैत्यंहरतीति मधुहृत् विष्णुः तत् सुमनसांदेवानांहृन्दं आदौवहिर्मुखादौंगितैर्विकासितंवीक्ष्य हृदि च असुरसत्रमहिषसत्र भीर्भयंयस्मिन् तादृशं वीक्ष्य सर्वज्ञत्वादनुभूय आदौ उपचीयमानां मुदं पश्चात् शोकेनापिमिश्रिताम करोत् मधुः पुष्परसेचोद्रेमद्येनातुमधुद्रुमे वसन्तदैत्यभिद्यैत्रे इति हैमः श्लेषमूलोपमेयम् ॥ ३३ ॥

आकाशव्याप्त सुच्चैर्वितरणनिपुणं निर्मलस्या स्यतस्य
यागोत्पत्तिं च विद्युद्वसन मतिशयश्यामलस्निग्धवर्णम् ।

तापघ्नं सर्वबीजप्रभव सुरुतरं बिभ्रतं जिष्णुचापं ।
वीक्ष्योपेन्द्रं प्रपेदे मुदमथ नितरां चन्द्रभृन्नीलकण्ठः ॥ ३४ ॥

"आकाशव्याप्तमिति" अथ मस्तके धृतचन्द्रः नोलकंठः शिवः उपेन्द्रं विष्णुं वीक्ष्यनितरां मुदं प्रीतिं प्रपेदे प्राप कोदृशंविष्णुं आकाशवत् वहिरंतश्च व्याप्तं तथाउच्चैः निर्मलस्यमायाकृतोपाधिरहितस्य अमृतस्य मोक्षस्य वितरणे स्वभक्तान्प्रतिदानेचतुरं तथा यागानां यज्ञानां उत्पत्तिर्यस्मात् यज्ञपुरुषत्वात् तथाविद्युत्वत् वसनानिवांसासियस्य तथातिशयेनश्यामलंस्निग्धं च वर्नमस्य तथा संसारतापत्रयनाशकं तथासर्वेषां महदादीनां वोजं मूलकारणं प्रकृतिः तस्याः प्रभवउत्पत्तिर्यस्मात् तथाउरुतरंमहांतंजिष्णुंजयनशीलं शार्ङ्गाख्यंचा-पंधनुर्विभ्रतं अथोपमानात्मकोऽप्रस्तुतार्थः तथाहि चंद्रभृत् बर्हेधृतमेचकः नीलकंठः मयूरः उपेन्द्रंइन्द्रस्यसमोपेवर्त्तमानं मेघं वीक्ष्य नितरांमुदंप्रपेदे कोदृशंमेघं आकाशव्याप्तं तथा उच्चैः निर्मलस्य स्वच्छस्य अमृतस्यजलस्य दानेचतुरं यथायज्ञेभ्यः उत्पत्तिर्यस्य यज्ञाद्भवति पर्जन्यइतिगोतोक्तेः तथा विद्युतोवसनं निवासो यस्मिन् तथा अतिशयश्यामलस्निग्धवर्णंइतितुल्यं तथा घर्मजन्यसंतापनाशकं तथा सर्वेषांगोधूमादिवीजानां प्रभवोयस्मात् तथा महांतं जिष्णोरिंद्रस्यचापंविभ्रतं मेघेहिचित्रवर्णं महत् शक्रधनुर्दृश्यते नील-कंठस्तुदात्यूहेकलविंकेचवर्हिणि सितापांगे हरेपोतसारकेकाल कंठवदिति विश्वः चंद्रोंवुकाम्ययोः स्वर्णशुभ्रांशुकर्पूरकांपिल्येमेचकेपिचेतिहैमः जिष्णुर्ना-वासवेऽर्जुने जितृवाच्यवदिति च ॥ ३४ ॥

तद्दर्शनात्सफलतां मनिमेषदृष्टे र्मत्वाथशर्वमुखसर्वसुपर्वसंघाः
कोटीरकोटिगतहीरमणिप्रदीपै र्नीराजयन्ति चरणे
स्म तदा तदीये ॥ ३५ ॥

"तदिति" अथशिवाद्याः सर्वेदेवसमूहाः तस्यविष्णोर्दर्शनात् निमेष रहितायाः स्वदृष्टेः सफलतांमत्वा अद्यैवनश्चिरमर्जितस्यानिमेषत्व गुणस्य साफल्यंजातमिति निश्चित्यमुकुटाग्रगतहोरकमणि रूपैः प्रदीपैः तदातदीये विष्णु संबंधिनो चरणेनीराजयंति स्म विष्णुचरणयोः प्रणेमुरित्यर्थः ॥ ३५ ॥

श्रांतश्चिरं किं दधदंघ्रिजां मे पुनर्भवं शौ हि नदीं निधित्सुः ।
इति भ्रमेणे व नमंत मीशमुत्थाप्य दोर्भिः स्वजतेस्म विष्णुः ३६

"आंसइति" अथविष्णुः नमंतंनतिंकर्तुमुत्सकं ईशंशिवं इतिभ्रमेणेव स्वभुजेः उत्थाप्य आलिंगितवान् इति किं अयंशिवः चिरकालं मत्पादप्रसूतान दीगंगांशिरसिदधत् सन् किंश्रांतः अथ च अममसह्यमानः पुनर्मत्पादे एव शिरोनमयित्वा किंतांनिश्चित्यः निधातुकामोस्ति ॥ ३६ ॥

चार्वर्णां मनुमनुवर्णकं क्रमेण श्री
भर्तुर्भणित दशावतार लीलाम।
आरब्धुं स्तुति मथ हृद्धर्षिणीं
ते शक्राद्याः परिकरबंध माशु चक्रुः ॥ ३७ ॥

"चार्वर्णामिति" अथ प्रणामानन्तरं इन्द्राद्याः देवाः विष्णोः स्तुतिं आरब्धुं परिकरबंधंआशु शीघ्रंचक्रुः स्तुतिंकर्त्तुमुन्मुखा अभूवन्नित्यर्थः कोदृशीं स्तुतिंचारूणि अर्णानि वर्णानियस्यां तथामनोः ओं नमोभगवतेवासुदेवायेति द्वादशार्णमंत्रस्य वर्णं वर्णं प्रतिक्रमेण विष्णोर्भणितामत्स्यादीनांदशावताराणां लीलायस्यां तथा हृत् हृदयंप्रहर्षितुंशीलमस्यास्तां प्रहर्षिणीति स्तुति गत वृत्ततामाप्यभिहितम् ॥ ३७ ॥

ओंकारं श्रुतिततयो य मामनन्ति
कल्लोला इव जलधे र्दशावताराः
स्वां लीला मनुसरतो यत स्तमासं स्तं
विष्णुं मरकतकान्तमाश्रितास्त्वाम् ॥ ३८ ॥

स्तुत्यारंभेदशावतारलीलावर्णनायबीजमाहुः "ओंकारमिति" तंतुांविष्णुं सर्वव्यापं वयं आश्रिताः स्मः ननुसर्वव्याप्तस्य देहंतर्हिविशेषतोऽत्रागमने किं प्रयोजनमित्याहुः कोदृशंतुां मरकतोनीलमणिः तद्वत्कांतंसुन्दरं अयंभावः त्वंसर्वत्रव्याप्तोप्यस्मदादोनामतत्त्वज्ञानां चर्मचक्षुषामनुग्रहाय धृतपरिच्छिन्न सगुणस्वरूपोसि अतएवात्रागतः स्मः तंकंयंत्वां श्रुतिततयः ओंकारं ओंकार वाच्यं परमात्मानं आमनंति तथाहि ओमित्यनेनैवाक्षरेण परंपुरुषमभिध्यायीत अत्रद्वितोयार्थेतृतीया ओंकाराक्षरवाच्यं पुरुषमुपासोदित्यर्थंतुात् ओमित्या-त्मानं युंजीत ओमितिब्रह्मध्यायथात्मानमित्याद्याः श्रुतयः गीतायामप्युक्तम् ओं

इतीरकाचरंब्रह्मेति अथचयतस्त्वत: सालीलां अनुसरत: मत्स्यादयो दशावताराः समासन् प्रादुर्बभूवु: कस्मात्के इव जलधे: समुद्रात्कल्लोला इव यथा कल्लोलाः समुद्रात् नाममात्रतएव पृथङ् निर्दिश्यंते वस्तुतस्तुतद्रूपाएवतथातृत्तोऽवतारा अपीति भाव: ॥ ३८ ॥

नष्टासु श्रुतिषु विरंचिधाम्नि सिंधौ
शंखेन प्रसभसुरद्विषा हृतासु ।
तं हत्वा पुनरपि यो ददौ विधात्रे
तान्वेदां स्त्वमसिसचापि मत्स्यमूर्ति: ॥ ३९ ॥

तावन्मत्स्यावतारंवर्णयंति "नष्टास्विति" पुराब्रह्मलोके श्रुतिषु नष्टासु लुप्तासुसतीषु अथ च प्रसभेन बलात्कारेण सुरान् द्वेष्टीति तेनशंखनाम्ना असुरेण सिंधौहृतासु सतीषु अथतंशंखासुरंहत्वा पुनरपि ब्रह्मणे तान् वेदान् यो ददौ स: मत्स्यमूर्त्ति: धृतमत्स्यावतारस्त्वमेवासि ॥ ३९ ॥

मोक्षार्थं सुररिपुसंहृते: पयोधौ
मंथानीभवति च मंदरेऽह्यधस्तात् ।
तं धर्त्तुं किल कमठीकृताकृतिं त्वां
वैकुण्ठं स्मरति नक: कठोरपृष्टम् ॥ ४० ॥

कूर्मावतारं वर्णयंति "मोक्षार्थमिति" पुराक्षीरोदमंथनकाले दैत्यसमूहस्यमोक्षार्थं सिंधौ च मंदराचले मंथानीभवतिसति तं मंदराचलंधर्त्तुं अधस्तात् कूर्मीकृतस्वात्मानंत्वांक: श्रेयोर्थीनस्मरतिअपितु सर्वोपि कीदृशं त्वां वैकुण्ठंविकुण्ठनिवासिनं तथाकठोरपृष्टं कूर्मत्वात् ॥ ४० ॥

भद्रंनो दिशदधतेहि यत्त्वमूर्त्तेर्वाराहीतनुरवनिं समुज्जहार
या मग्नां खलु जलधौ हिरण्यचक्षुर्दैवारेस्सम मसुभिश्च
मुष्णतो गाम् ॥ ४१ ॥

वराहावतारं वर्णयंति "भद्रमिति" तेहि तवेवयत्त्वमूर्त्ते: सावराह संबंधिनीतनु: न: अस्मात् भद्रं कल्याणं अदिशत् ददौ सायाया हिरण्याक्षनाम

दैत्यस्य प्राणैः सहसमुद्रेमग्नां भूमिं उज्जहार दंष्ट्राग्रेणेतिशेषः हरिण्याक्षंहत्वा भूमिमुद्धृतवतीत्यर्थः कोदृशस्याग्रां पृथ्वीमुष्णतः चोरयतः सहोक्तिरलंकारः ४१

गर्ह्यायां श्रुतिभि रटन्नसौ सरण्यां
स्तम्भांतर्निरसुरकारि येन तीक्ष्णैः।
हस्ताग्रैः किल कशिपुर्हिरण्य पूर्वः
प्रह्लादप्रियमिहतं नुमो नृसिंहम् ॥ ४२ ॥

नृसिंहावतारं वर्णयंति "गर्ह्यायामिति" तं नृसिंहावतारं त्वां वयंस्तुमः कोदृशं प्रह्लादः प्रियोयस्य प्रह्लादरक्षार्थैस्वीकृतावतारमित्यर्थः तंकंयेन त्वया वेदनिंद्यायांसरण्यांपथि अहमेवेश्वर इत्यात्मन्यत्यन्तपूज्यताति शयाध्यारोपरूपे वेदविरुद्धमार्गेगच्छन् हरिण्यपूर्वः कशिपुः हरिण्यकशिपुरित्यर्थः स्तम्भस्यां-तर्मध्येतीक्ष्णैः हस्ताग्रैः नखैः निरसुः गत प्राणः अकारिकृतः । ४२ ।

वर्धिष्णु स्तव च तनुर्वभौ यदंघ्रि
न्यासार्थं जग दखिलं वभूव नालम्।
यं वीक्ष्यार्थिन मिव वामनं मनस्वी
पाताला द्वलिरलभत् क्षितिं नचार्वाक् ॥ ४३ ॥

Centre for the Arts

वामनावतारंवर्णयंति "वर्धिष्णुरिति" तेतव वृद्धिशीला वामनीतनुः वभौ वर्धिष्णुतामिवाहुः कोदृशीयस्याः पादविक्षेपार्थं स कलमपिजगत् षलं पर्याप्तंनासीत् यंत्वां मनस्वो मानशीलः वलिः वामनंखर्वशरीरं अर्थिनं याचकमिववीक्ष्य पातालात् अर्वाक्क्षितिंनअलभत् इतरयाचकवद्दर्शनमात्रा वश्यैवाधोपतत्किमुसाक्षात्तवावज्ञायाः फलं वक्तव्यमितिभावः ॥ ४३ ॥

तेरु यं जलनिधित स्थयाः कपीनां
संस्मृत्य प्रथमजुषोऽपि तद्दैव।
पौलस्त्यं यमसदनं निनाय यश्च
स्वास्यं नस्त्वमिह रघूद्वहस्तुमस्तु ॥ ४४ ॥

रामावतारमाहुः "तैरदिति" तंरघूद्वहं रामावतारंस्तुमः तं कं यंशा संस्रुत्य कपीनां हनुमदादीनांघयाः जलनिधितः तैरुः तद्देवतैरेव प्रकारेण यं संस्तृतैरवेत्यर्थः प्रथमजुषः योगिनोपि जलनिधितः संसार समुद्रात् यद्वाज-डानामाकाशादीनांनिधिः संसारस्तस्मात् तैरुः तथायोरामः पौलस्त्यंरावणं यमसदनंनिनायतंहत्वा च नः अस्मान् स्वास्थ्यंनिनाय ॥ ४४ ॥

बाहूं स्त्वं किल कदलीदलालिवत्
प्रागच्छेत्वाः स्वपरशुना सहस्रबाहोः।
निःक्षत्रांक्षितिमपि च त्रिसप्तकृत्वः
कृत्वा तद्रुधिरकरैः पितृनतार्प्सीः ॥ ४५ ॥

परशुरामावतारंवर्णयंति यः त्वं परशुरामः स्वपरशुना सहस्रबाहोः सहस्रसंख्याकान् बाहून् कदलीपत्रपंक्तिवत् प्रच्छेत्साः यश्च त्वं भूमिंत्रिसप्त कृत्वः एकविंशतिवारान् निःक्षत्रां क्षत्रजातिरहितांकृत्वा तेषां क्षत्रियाणां रुधिरप्रवाहैः स्वपितृम् अतार्प्सीः पितृतर्पणंचकर्थेत्यर्थः त्रिसप्तकृत्वत्व क्रियाया आवृत्तौ कृत्वस् इति कृत्वस् प्रत्ययः । ४५ ।

स्वक्रांत्वा खिल भवनीतलं सुरारिं
संश्रित्या मररिपुकंटकान् स्व निघ्नन् ।
यो बीजं सुकृतमुवाप लांगलेन
त्वंसी व्या श्रितदरहा प्रलंवशत्रुः ॥ ४६ ॥

बलभद्रावतारंवर्णयंति "स्वक्रांतेति" यः प्रलंबस्यशत्रुर्बलभद्रः सर्वं पृथ्वी तलं सुक्रांत्वा भ्रमित्वा सुरारिं कृष्णञ्च संश्रित्य सहजत्वेनाश्रित्य अमररिपवः दैत्या एवकंटकाः क्षुद्रशत्रवः तांश्चनिघ्नन् सन् लांगलेनहलेन सुकृतंधर्मरूपं बीजं उवाप रोपितुमेवासि अन्योपिकृषीवलः भूमिंभ्रमित्वा कंटकांश्चहलेन हत्वाबीजंवपति कीदृशः बलभद्रः आश्रितजनानांदरंभयंहंतीतिसः । ४६ ।

देवाना मरिजदरापनुत्तये यः
स्वान्वेदान्स्वयमपि गर्हयांबभूव ।

तत्राद्धा पशुजनितां समीक्ष्य हिंसां
मूर्त्ता सौरिव करुणा स बुद्धमूर्त्तौ ॥ ४७ ॥

बुद्धावतारमाहुः "देवानामिति" सः त्वं बुद्धमूर्त्तौ हिंसानिषेधात् मूर्त्ता परिच्छिन्नाकरुणादयैवाऽऽसीः अभूः यः बुद्धः देवानां अस्माकं अरिजस्य दःस्य भयस्य अपनुत्तयेनाशाय स्वान्स्वश्वासरूपानपि वेदान् गर्हयांबभूव निनिन्द स्वभक्तजनरक्षार्थे श्वासरूपानपिवेदायेन निन्दिताः किमन्यत्त्वत्कारुण्यं व-क्तव्यमितिभावः ननुदोषंविनाननिंदोचितेतितेषुदोषमाहुः किं कृत्वानिनिन्द तत्रवेदेषु श्वासस्यकू पशुजनितां पशोरित्यर्थः हिंसां आग्नेषोमीयं पशुमाल-भेतेत्यादि रूपां समीक्ष्य यद्यप्यत्र वेदेतिसामान्याभिधानं तथापि कर्मकला-माभिप्रायंद्रष्टव्यं तत्त्वमसीत्यादि तत्त्वज्ञानस्य पि वेदप्रतिपादितत्वात् सांख्य-मतत्तावप्युक्तम् दृष्टवदानुश्रविकः सह्यविशुद्धिक्षयातिशययुक्त इति अस्यार्थः आनुश्रविकः वैदिकः कर्मकलापः दृष्टवत् रोगादीन्प्रति औषधादिर्लौकिको-पायवत् अस्तिऐकान्तिकात्यंतिकदुःखत्रयप्रतीकारानुपायत्वस्योभयत्रतुल्यत्वात् अत्रहेतुमाह हियतः सः आनुश्रविकः अविशुद्ध्यादियुक्तः अविशुद्धिः पशुवध-रूपाक्षयः तत्फलस्वर्गादेः कार्यत्वात् अतिशयोऽपि स्वर्गादेरेव ज्योतिष्टोमा-दीनां स्वर्गमात्रसाधनत्वात् वाजपेयादीनां स्वाराज्य साधनत्वात् परसंपदुत्क-र्षोहिहीनसंपदंपुरुषंदुःखाकरोति । ४७ ।

वातूलप्रबलजवेन वाजिनो यो
म्लेच्छानां चयमवधीत्कृपाणपाणिः ।
ध्वांतानामिव तरणिर्युगावसाने
धर्मस्यांकुरमिव सोसि कल्किमूर्त्तिः ॥ ४८ ॥

कल्क्यवतारंवर्णयंति "वातूलेति" सः कल्क्यवतारः त्वमेवासि सः कः यः कल्कीवातप्रावत् प्रबलोवेगो यस्य तादृशेन वाजिना उपलक्षितः सन् युगावसाने कलियुगांते म्लेच्छानांसमूहं अवधीत् केषांसमूहंकइव ध्वांतानां तमसांसमूहं तरणिः सूर्यइव कीदृशः कल्कीकृपाणः खड्गःपाणौकरे यस्य तथा धर्मस्य अंकुरंवीजमिव नष्टस्य धर्मस्य पुनरुत्पादनात् अमी अवतारा भाग-वतादिभ्यः सेतिहासंसम्यगवगतव्याः । ४८ ।

Indira Gandhi National

यस्मिं स्त्व्यखिल मिदं सम प्रकृत्या
कल्पांते महदहमादि सुप्तशक्ति ।
लिल्ये सत्यपुरुषे परे पुराणे
तंतूनां ततिरिव तंतुवायजन्तौ ॥ ४९ ॥

अथानुक्रमेणप्राप्तस्ययकारस्यलक्षणार्थं ततोऽवतारदम्रव स्याध्यारोप मुक्तातदुपलक्षणात्सर्वंप्रामपवादमाह "यस्मिन्निति" यस्मिन् त्वयिविष्णौकल्पांते सति इदंसर्वंमहदहमादि महत्तत्त्वाहंकारादिकं जडजातं प्रकृत्यासह सुप्ताशक्तिः प्रकृतिर्यस्य तादृशं सत्लिल्ये लीनमासीत् कीदृशेत्वयि असतः अज्ञानादिजडजातात् परेतथा पुराणेसनातने पुरुषे तथा परे अत्युत्कृष्टे लयेदृष्टांत माह तंतुवायनाम्निजन्तौजीवेतंतूनां ततिरिव तथातन्तुवायः स्वेच्छयातंतून् सृजतिग्रह्णाति च यथोर्णनाभिः सृजतेग्रह्णातेचेतिश्रुतेः ॥ ४९ ॥

इति स्तुतउद्भूतां मुद मुदितततोयै र्बहि रिवो
द्वमंतीभ्यां दृग्भ्यामतिसुद मितां दैवततिम् ।
विषूचीनां विष्णुः स्वयमथ समाहूय विधिना
निनायांतः सौध हरकरसनाथीकृत करः ॥ ५० ॥

"इतीति" इत्यस्याऽस्तुतेः उद्भूतांमुदं तज्जन्यतोयैः आनन्दाश्रुभिः बहिरिव उद्वमन्तीभ्यां स्वदृग्भ्यांकृत्वा अतिशयेन मुदंप्राप्तां देवततिं स विष्णुः अन्तः सौधंनिजांतः पुरंनिनाय कीदृशीं विषूचीनांबहुत्वात् व्याप्तां किं कृत्वा विधिनाब्रह्मणासह आदरविधानेन सहवास्वयंसमाहूय कीदृशः विष्णुः हरकरेणसनाथीकृतः स्वकरोयेन शिवहस्तमवलंब्येत्यर्थः ॥ ५० ॥

प्रतिष्ठाप्य मध्ये सभं तत्र सर्वान्यथार्हं स्वयं तत्र भर्गेण सार्धम् ।
विरेजे स सिंहासने सन्निविष्टो यथा ज्ञान मंतस्त्र
योगेन साकम् ॥ ५१ ॥

"प्रतिष्ठायेयेति" स विष्णुः तत्रांतः पुरे मध्येसभं स भायाः मध्येयथा योग्यं सर्वान् प्रतिष्टाप्यस्वयं च भर्गेण शिवेन सार्धं सिंहासनेसन्निविष्टः सन्

विरेजे कथं यथा अन्तर्हृदये योगीन चित्तवृत्तिनिरोधेन साकंज्ञानंविराजति तद्वदित्यर्थः सधेरसभमित्यत्र पारेमधेत्रष्ष्ठ्या वेति निपाताास्साधुः ॥ ५१ ॥

पृष्टः सोऽथ प्रणयिवचसा विष्णुना चन्द्र-
मौलिर्हेतुं देवागमन मभि तं पूर्ववृत्तं निवेद्य।
प्राहो पायं कथय च विभो कावलापी दृशी स्या
द्यातं हन्यादृधि रिपुं स्वःसदोप्येवमूचुः॥ ५२ ॥

"पृष्टइति" अथचन्द्रमौलिः शिवः प्रणयिवचसा प्रेमयुक्तवचनेन कृत्वा विष्णुना देवागमनंप्रति हेतुंपृष्टः सन् पूर्ववृत्तं महिषोत्पत्ति धातृवरदान देवतिरस्कारादिकं पूर्ववृत्तांतं तंप्रतिनिवेद्य अन्यच प्राहकिमित्याह हे विभो याबंला युद्धे तंहरेरखस्य इन्द्रस्य वारिपुंमहिषंहन्यात् साऽदृशी अावलास्यात्वेतिसम्भावनायांलिङ् इत्युपायंकथय इतिशिववाचंश्रुत्वा अन्येपिस्वः सदः देवाः एवमेवोचु यथाशिवेनोक्तमित्यर्थः॥ ५२ ॥

भगवानपि तस्थिवान्क्षणं हृदि गीर्वाणगिरं निगीर्य्यताम्।
अबलां सबलां विचिंतय ञ्जगदेषो ञ्जगदेक कारणम्॥ ५३ ॥

"भगवानिति" विष्णुरपि गीर्वाणानां देवानां गिरंह्यदि निगीर्य क्षणं तस्थिवान् निश्चलो भूदित्यर्थः किं कुर्वन् काञ्चित् अबलां सबलां विचिंतयन् सन् अथ चिन्तयित्वा तान्प्रतिवक्ष्यमाणं जगदे कीदृशः विष्णुः जगतः एकं कारणं यद्वा जगदेक करण रूपा मायांशक्तिमेव सबलां जगाद ॥ ५३ ॥

पृथङ्नैवासौ द्या द्युतिरिव रवेः प्रत्नपुरुषा
द्यया सोऽप्यौवालं प्रथितयशसा भावि विभुना।
यदायत्त स्तिर्यङ्जनिषु च पताभि प्रतियुगं
न सा शक्तिः शक्ता महिषनिधने ब्रह्ममहिषी॥ ५४ ॥

किं जगादेत्याह "पृथगिति" सा ब्रह्मणः परमात्मनः महिषीपट्टराज्ञीचिच्छक्तिः पूर्वप्रतिपादिताजडायाः प्रकृतेरतिरिक्तैवकाचिद चिन्त्यमहिमा भगवती महिषस्यनिधनेन शक्ता न समर्थेतिकाकुःसाका या प्रत्नपुरुषात्

परमात्मनः पृथक् भिन्नानैवासीत् एवकारोऽत्यन्ताभेदसूचकः परमार्थतः शक्तिशक्तिमतोरभेदात् तदुक्तं कूर्म पुराणे शक्ति शक्तिमतोर्भेदं वदन्त्य परमार्थतः अभेदमनुपश्यन्ति योगिनस्तत्त्वचिन्तका इति मतुबन्त्वापारमार्थिकं भेदमादाय यथातन्तुमान्पट इति अमुमेवार्थं दृष्टांतेन दृढयति रवेर्द्युतिरिव यथा सूर्यात् प्रभाभिन्ना कर्त्तुं न शक्यते सूर्यस्यप्रभात्मकत्वात् व्यवहारतस्तु पुंस्त्रीनाम्ना भण्यते अथापरमार्थतोभेदंपश्यतांमतेपि शक्तेरेवाधिक्यं प्रतिपादयति यथा शक्त्याऽऽत्मा विष्णुनापरमात्मना कर्त्रा प्रथितयशसा प्रसिद्धसच्चिदानन्दादिकीर्तिमता अभावि भूतं तदुक्तं शक्तिं विनाशिवेसूक्ष्मेनामधामन विद्यते इति कीदृश्याशक्त्या साध्व्येव प्राकृतपतिव्रतास्त्रियेव यथा पतिव्रतयास्त्रियाजनः प्रसिद्धकीर्त्तिर्भवति ननुत्वत्तोपि सर्वशक्तिमतः किं सा अधिकास्तीत्या शंकापनुत्तये स्वस्यैव तदधोनतांदर्शयति यस्याः शक्त्याः आयत्तः अधीनः सन् अहमपि अनिच्छन्नपि मत्स्यवराहादिषु तिर्यक्जनिषुपश्वादियोनिषु प्रतियुगं पतामि नतुस्वेच्छयेत्यर्थः अन्यथाकोवुधोविकुण्ठति वासं विहाय गर्भवास जन्यंकष्टंपश्वादियोनिंवाकांक्षते तथा च देवो भागवतेदेवान्प्रतिविष्णुवाक्यम् यद्यहंस्यांस्वतन्त्रोचचिन्तयन्तुधियाकिल कथंभवामि मत्स्योऽहं कच्छपो वामहार्णवेतिर्यग्योनिषुकोभोगः काकीर्त्तिः किं सुखंपुनरित्यादि ॥ ५४ ॥

**अहो किमु न स्मरसि त्वमिरेश गृहीतमदंगचयां प्रलयाम्बु। तरिष्यसिया मभिनूय भियं मधुकैटभजां भजता मधुनापि ५५**

तस्याः प्रभावं ब्रह्माणमपि पूर्वदृष्टंस्मारयति "अहोइति" हे इराय: सरस्वत्याः ईश स्वामिन् हे ब्रह्मन् प्रलयाम्बु प्रलयकालीन समुद्र जलेषु गृहीताः मदंगानांचयाः नेत्रास्यहृदादयः ययातां ममसर्वांगव्यापिंनोनिद्रात्मिकां भगवतीं त्वं किं न स्मरसि इतिकाकुः तांकांयांअभिनूयस्तुत्वा त्वामनु,कामाभ्यां मधुकैटभाख्याभ्यां दैत्याभ्यां जन्यां भियं त्वं तरिष्यसि अतर इत्यर्थः तां भगवतीं अधुनापिभज अधुनाऽपितद्वत् महिषजभयंसैव सूतानाशयिष्यतीत्यर्थः एतदेवमार्कण्डेयपुराणे योगनिद्रांयदाविष्णुर्जगत्येकार्णवो कृत इत्यादिना एषमेवासमुत्पन्नाब्रह्मणासंस्तुतास्वयमित्यंतेन सम्यक् प्रदिपादितं तरिष्यसीत्यत्र अभिज्ञावचनेल्लृडिति भूतार्थे ल्लृट् इरा भूवाक् सुरासुरादित्यमरः मौक्तिकदामनामवृत्तमिदं तल्लक्षणंवृत्तदर्पणेप्रोक्तम् चतुर्जगणैर्विहितं किमनामसुवृत्तमिदं सुविमौक्तिकदामेति ॥ ५५ ॥

इतीह निखिला वयं कथमपीश्महे नो मनाक्
विकाशयितु मक्षिणी अपि शिवादय स्तां विना ।
अतः सकलदेहिनां पुरुषकाररूपा यथा
भजेत्प्रकटतां हि सा प्रयतत द्युनाथास्तथा ॥ ५६ ॥

तत्प्रभावमुपसंहरन्नादिशति "इतोहेति" इत्यमुनाप्रकारेण वयं निखिलाः सर्वेपि शिवादयोदेवाः यद्वा वयं शिवादयोदेवाः निखिलाः अन्ये च सर्वलोकाः यद्वा हे शिवादयोदेवाः निखिलाः लोकाः वयं च तां शक्तिंविना अक्षिणीनेत्रे अपि विकाशयित्वं उन्मीलयितुं कथंचिदपि मह्त्तायत्नेनापि न शक्नुमः किं पुनः सृष्ठ्यादि व्यवहारं कर्त्तुं न समर्था इति वक्तव्यमिति भावः तदुक्तं श्री मच्छंकरपादैः शिवः शक्त्या युक्तो यदि भवति शक्तः प्रभवितुं न चेदेवं देवो न खलु कुशलः स्पंदितुमपीति अतोऽस्माद्धेतोऽसा भगवती सर्व देह भृतां देहे षु पुरुषकाररूपा शक्तिरूपा यथा येन प्रकारेण प्रकटतां भजेत् आविर्भूयात् हेद्युनाथाः देवाः तथाप्रयततयत्नं कुरुत तथोक्तं मार्कंडेये या देवी सर्वभूतेषु शक्ति रूपेण संस्थितेति पृथ्वीवृत्तमिदं जसौजसयलावसुग्रहयतिश्च पृथ्वी गुरु रितिलक्षणात् ॥ ५६ ॥

Indira Gandhi National
Centre for the Arts

अथ निजनिजतेज सर्वे एवो द्गिराम
स्तनुजनि तत एवा विर्भविष्यत्यजा सा ।
इति मधुरिपुगीतां प्रेंखितै मौलिभि स्ते
हितमुदितमुदित्वा वाच मानर्चु रुच्चैः ॥ ५७ ॥

ननुकथं सा प्रादुर्भावंभजेतेति तदुपायं स्वयमेवाह "अथेति" अथानंतरं हे देवाः वयं सर्वे तनुजनिशरीरजन्यं निजनिजतेजः उद्गिरामः शरीरात् बहिर्निष्कासयामः ततः सर्वेषांतेजः पुंजादेव साऽजा जन्महीना आविर्भविष्यति नतुजनिष्यति अतएवाऽजेत्युक्तं अथतेदेवाः हे भगवन् त्वयाहितं उदितं कथितं इति उच्चैः उदित्वा उक्त्वा इत्यमुनाप्रकारेण मधुरिपुणा विष्णुनागीतां वाचं प्रेंखितैः आकंपितैः मौलिभिः मस्तकैः आनर्चुः पूजयामासुः अन्योपि श्लाघांकुर्वन् शिरः कंपयति तद्वाचंस्तोचक्रुरितितात्पर्यम् वेल्लितप्रेंखिता धूत चलिता कंपितोधुते इत्यमरः ॥ ५७ ॥

श्रीमाञ्छम्भो स्स्वरणसदनीभूत हृच्छंसुनाथो
लक्ष्मीनाथं कविपरिदृढं देशकोऽसूत यं माम्।
तेनोद्गीते महिषनिधने गीतलक्ष्मीचरित्रे
लक्ष्मी काव्ये विरतिमगमच्चैष सर्गश्चतुर्थः ॥ ५८ ॥

श्रीमानित्यादि पूर्ववत् ॥ ५८ ॥

इति श्री मङ्गोस्वामिवंशावतंस श्रीमच्छंसुनाथात्मज
लक्ष्मीनाथ कवि विरचिते लक्ष्मीकाव्ये
चतुर्थः सर्गः समाप्तः

इति श्री लक्ष्मीनाथ विरचितायां लक्ष्मीकाव्यव्याख्यायां
*⊛ चतुर्थः सर्गः समाप्तः ⊛*



# ॐ नमः शिवे

अथ लय इव जातधीरकांडे महिषकृतां विनिधाय हृद्यवज्ञाम्
अतिभ्रकुटिकराल भाल मध्य स्फुटित तृतीयदृगीश्वर
श्चुकोप ॥ १ ॥

ॐ नमोविघ्नहर्त्रे अस्मिन्सर्गे विष्णुवाचमंगीकृत्य निजनिजतेजउद्गमद्यो देवेभ्यो महालक्ष्मी प्रादुर्भावो वर्णयिष्यते तावत्सर्वमुख्यत्वाच्छिवस्येव तेज उद्गमनेस्वरूपमाह "अथेति" अथ विष्णुवाक्योकारानंतरं ईश्वरः शिव एवादौ चुकोप किं कृत्वा क्रोधोद्भवाय महिषेणकृतां अवज्ञां हृदिविनिधायस्थापयित्वा कोदृशः शिवः अतिशयेन भ्रकुट्याकरालस्य भालस्य मस्तकस्य मध्यात्स्फुटिता उज्जृंभितातृतीयादृक् दृष्टिर्यस्य कोदृश इव अकाण्डे असमये एवलये प्रलये जातधीः उत्पन्नबुद्धिरिवेत्युत्प्रेक्षा प्रलयेहि शिवस्य तृतीया दृष्टिरुज्जृंभते अत्र क्रोधः स्थायि भावः रौद्ररसोऽभिव्यज्यते अवलंबनमत्रमहिषः तत्कृतावज्ञाचो-द्दीपनं अतिभ्रकुट्यादयश्चानुभावाः आवेगादयोव्यभिचारिणश्चाक्षेप्याः तदुक्तं रौद्रः क्रोधस्थायिभावो रक्तोरुद्राधिदेवतः आलंबनपरिस्तत्र तच्चेष्टोदीपनं मतं भर्त्सनं मूर्धनिर्धूतिद्दृगंते पाटलच्छविः भ्रू भेदाधरकंपाद्या अनुभावास्तथो-दिताः आवेगोजडतागर्वोदोमोहचापलौ असूयापि तथा मर्षभ्रमाद्याव्यभि-चारिण इति काण्डोस्त्रीदण्डवाणार्धवर्गावसरवारिष्वित्यमरः अस्मिन्सर्गेपु-ष्पिताग्रावृत्तं अयुजिनयुगरेफतोयकारोयुजिचनजौजरगाश्च पुष्पिताग्रेति लक्षणात् ॥ १ ॥

तत उरुतरतेज आविरासी दलि
कुलकालिमशालि तन्मुखाब्जात् ।
गिरिरिव धुरि त द्वराज पिण्डी
भव दभित स्व विस्फुलिङ्गार्चिरुग्रम् ॥ २ ॥

"ततइति" ततः कोपानन्तरं तस्य शिवस्य मुखकमलात् उरुतरं अति महत् तेजः आविरासीत् कोदृशं भ्रमरसमूह कज्जल शीलं तमोगुणा धिक्यात् मुखरूपकमलात्कृष्णवर्णं तेजोरूप भ्रमरसमूहस्था विभांवोयुक्तएव तच्चतेजः अग्रेपिंडोभवत् सत् गिरिरिवरराज कोदृशं अभितः सर्वतः विस्फुलिङ्गाभिर्विस्फु-

ष्मोलाभिः अर्चिर्भिर्ज्वालाभिरत्यग्रभीमं तदुक्तं देवी भागवते शङ्करस्य शरीरा-त्तु निःसृतं महदद्भुतं मषीवर्णं महातीव्रं दुर्दर्शं दारुणं महत् घोररूपं गिरिप्रख्यं तमोगुणमिवापरमिति विद्युत्त्वरित्यत्र इवार्थादित्वात् शैलेयैकरूप् ॥ २ ॥

तदनु सुररिपु स्तथैव कुप्यन्नति विशदं महः उद्ववाम वक्त्रात्।
अभिनवजलदाद्विनिःसृत स्य द्युतिमजयत्तदरं तुषाररश्मेः ॥३

"तदन्विति" तस्यतेजोनिस्सरणात्पश्चात् विष्णुरपि तथैवशिववत् कुप्यन् सन् सत्त्वगुणाधिक्यादति गौरवर्णं तेजः निजमुखात् उद्ववाम तत्तेजः अभि-नवजलदाद्विनिःसृतस्य चन्द्रस्य शोभासरमत्यर्थमजयत् विष्णुमुखस्यकृष्णत्वात् तेजसश्चश्वेत्यात् तदुक्तं तत्रैव ततो विष्णुशरीरात्तु तेजोराशिरिवा परः श्वेतं सत्त्वगुणोपेतं प्रादुरासीन्महाद्युति इति ॥ ३ ॥

अरुणमथ महो हिरण्यगर्भो रज इव मूर्त्तिधरं हिरण्यवर्णम्।
तिजवदनत उत्प्रभं कदुष्णं वमति तदा स्म स विस्मयप्रदात ४

"अरुणमिति" अथ सः हिरण्यगर्भः ब्रह्मानिजमुखात् रजोगुणाधिक्यात् अरुणं रक्तवर्णं तेजस्तदावमति स्म कीदृशं मूर्त्तिधरं रजोगुणमिव तथा हिर-ण्यवत् तप्तस्वर्णवत् वर्णं यस्य तथा उत् उत्कृष्टा प्रभायस्य तथाकदुष्णं ईषदुष्ण स्पर्शं तथा आश्चर्यप्रदात तदुक्तं तत्रैव इत्युक्तवति देवेशे ब्रह्मास्यवदनात्ततः उद्ववाममहत्तेजो राशिंवातीवदुःसहं रक्तवर्णं शुभाकारंपद्मरागसम प्रभं किं-चिच्छीतं तथाचोष्णां मरीचीजालमंडितमिति ईषदर्थेकोःकदादेशइतिकदुष्णं४

प्रलयसमयवह्निषा किमेते कनकहिमांजनभूभृतो ज्वलन्ति।
सुरततिरिति तेजसोत्करां स्तान्यपदि समीक्ष्य
चमत्कृता बभूव ॥ ५ ॥

"प्रलयेति" अथसुरततिः तान्शिवविष्णुब्रह्मणां तेजः संबंधिनः उत्करान् राशीन् वीक्ष्य इति मत्वाशीघ्रं चमत्कृता चित्रीभूता बभूव इति किं एतेत्रय-स्तेजोराशयः प्रलयसमयस्यवह्निषा अग्निना , किंकनकाचलहिमाचल अंजना चलाज्वलन्ति, इंद्रांतिश्रूयमाणत्वादचलवाचकस्य भूभृत्पदस्यप्रतिरूकानुषंगः तेज-

सांरक्तगौरकृष्णवर्णत्वात् मेर्वादिभिस्साम्यं बर्हिः शुष्माकृष्णवर्त्मेत्यमरः पुष्करा-म्भोतूत्करः कूटमस्त्रियामिति च ॥ ५ ॥

बलरिपुरपि वीक्ष्य चित्रितात्मा तदनु ससर्ज स चित्रमेव तेजः।
भवति हि सममेव कारणेनाखिलमपि कार्यमिति
व्यतर्कि देवैः ॥ ६ ॥

"बलरिपुरिति" इन्द्रोपि तान् तेजोराशीन् वीक्ष्य चित्रितात्मा बभूत् तदनु चित्रं चित्रवर्णमेव तेजः ससर्ज अथ तस्य चित्रवर्णतेजो वीक्ष्य देवैरिति व्यतर्कि इति किं हियतः अखिलमपि घटादिकं कार्यं कारणेन मृदादिना तुल्यमेव भवति तत एवास्य चित्रीभूतात्मनश्चित्रमेव तेज उत्पन्नमिति भावः तदुक्तं तत्रैव ततः शक्रशरीरात्तु चित्ररूपं दुरासदं आविरासीत्सुसंवृत्तं तेजः सर्वगुणान्वितमिति ॥ ६ ॥

अथ वसुदिगधीशरुद्रसाध्यग्रहमुनयोऽपि महो निजानुरूपम्।
बभुरतिकुपितास्तदा सृजन्तो मणिमिव खे पवनाशिनो
मुखेभ्यः ॥ ७ ॥

विशेषत एषां तेजोनिस्सरण प्रकारमुक्त्वासंप्रति सामान्यतः सर्वेषामाह "अथेति" तदनन्तरं वसवोऽष्टौदिक्पाला इन्द्रेशौविनाअग्न्यादयः रुद्राएकादश साध्याद्वादश ग्रहाः सूर्यादयः सप्त मुनयोनारदादयः एतेपि अतिकुपिताः निजानुरूपं स्वसदृशं स्वमुखेभ्यः तेजः सृजंतः संतः तदाबभुः कंसृजंतः के इव खेआकाशे स्वमुखेभ्यः मणिंसृजंतः पवनाशिनः सर्पा इव अतिकुपितत्वात्तेषां सर्पैस्साम्यम् ॥ ७ ॥

स्वयमथ महसां विसृज्य पुंजं स्वयमपि वीक्ष्य सुविस्मिता बभूवुः
कवय इव विधाय नूत्नभावोज्ज्वलमनवद्यपदालिहृद्यपद्यम् ८

"स्वयमिति" अथ ते देवाः स्वयमेवतम् महसांपुंजंविसृज्य अथ स्वयमेव वीक्ष्य सुविस्मिताऽत्याश्चर्यीभूताः बभूवुः अत्र दृष्टांतमाह यथा कवयः लोकोत्तरवर्णन निपुणाः नूत्नेन नवीनेन भावेन उज्ज्वलं तथा अनवद्यानिर्दोषा पदानां आलिः पंक्तिर्यस्मिन् तादृशं हृद्यं मनोरमं यद्वा अनवद्यपदालिभिर्हृद्यं

पद्यं स्वयमेव विधाय निर्माय पश्चात् स्वयमेव वीक्ष्य तत्र चमत्कारातिशयंदृष्ट्वा विस्मिता भवंति तद्वदित्यर्थः ॥ ८ ॥

शिवमहसि महांसि तानि तेषामथ
मिलितानि बभुस्तरां तदानीम्।
प्रलय इव समस्त जीवसंघा नि-
यति मुपेत्य तदीय एव तस्मिन् ॥ ९ ॥

"शिवमहसीति" अथ तेषां ब्रह्मादीनां तानितेजांसि शिवस्य तेजसि-मिलितानिसंति तदानीं अतिशयेनबभुः कथं यथा प्रलयकाले सर्वजीवसमूहाः नियतिंस्वस्वकर्मभोगावधिनियमं उपेत्य तदीयेएव तस्यशिवस्यैव तस्मिन् तेजसिमिलितानि विभान्ति तद्वदित्यर्थः नियतिर्नियमेदैव इति विश्वः ॥ ९ ॥

व्यलसदथ तदेव देवतेजः परिणत मिंदुमुखीतया ज्वलद्भिः।
निजमहिम यथा निराकृति प्राक्परमहो गुणरूप
नामशालि ॥ १० ॥

"व्यलसदिति" अथतदेव एकीभूतं देवानां तेजः इन्दुमुखीतयास्त्रीरूपेण परिणतंसत् व्यलसत् कीदृशं ज्वलन्तीश्रीर्यस्यतत् कथं यथा परममहः परंब्रह्म रूपंतेजः प्राक् निराकृति आकारविशेषैर्विहीनं केवलंतेजोरूपमित्यर्थः पश्चात् प्रकृतिसंगात् गुणरूपनामशालिसत् व्यलसत् तद्वदित्यर्थः कीदृशं तत् निजो ऽसाधारणो महिमा महत्त्वं यस्यतत् ॥ १० ॥

दृगविषयकटि स्त्रिदृष्टिरष्टादशभुजशोभितनूरसह्यवीर्या।
निखिलभुवनमंजुतैकसीमा सुरविसरैरिति सा व्यलोकि देवी ॥

"दृगिति" अथ देवसमूहैः सामान्यतः स्त्रीमात्र दर्शनानन्तरं सादेवी महालक्ष्मीरितिरूपाव्यलोकि दृष्टा इतिकीदृशी दृशोरविषया कटिर्यस्याः अतितनुमध्येत्यर्थः तथा तिस्रः दृष्टयोयस्या त्रिनेत्रेति तथा अष्टादशभिः भुजैः शोभितातनूर्यस्याः तथा असह्यं परैः सोढुमशक्यं वीर्यंयस्याः तथा निखिल लोकेषुयामंजुता सौंदर्यं तस्याः एकासीमा अवधिः समूहेनिवहव्यूहसंदोह विसरव्रजा इत्यमरः ॥ ११ ॥

हिमकरशकलोल्लसल्ललाटां चि-
कुरचयाम्बरितोरुमौक्तिकौ ऽघम् ।
अतिशयजयसूचकां शिवां तां
त्रिदिवसदो ददृशुर्मुदा तदानीम् ॥ १२ ॥

"हिमकरेति" तेदेवाः तदानीं तांशिवां मुदाददृशुः कीदृशीं हिमकरश कलेनचन्द्रार्धेन उल्लसत् ललाटंयस्याः यद्वाचन्द्रार्धवत् उल्लसत् ललाटंयस्याः तथाचिकुरचयः केशसमूहएव अम्बरंव्योम तस्मिन् सितानिबद्धानिविशदानिव, उरूणि भूयांसि मौक्तिकान्येवउडूनि नक्षत्राणियस्याः तथा अतिशयेनजय सूचकां अवश्यमेवास्माकं जयो भविष्यतीति तद्दर्शनेनैवतैर्निश्चितमिति भावः यद्वा तेदेवाः तांदेवीं शिवां अष्टमीतिथि रूपां मुदाददृशुः कीदृशीं अष्टमीं चन्द्रार्धेन उल्लसल्ललाटां शुक्लाष्टम्यांहि अर्धचन्द्रः संध्याकाले शिरसि दृश्यते तथा केशसमूहतुल्येव्योम्नि बद्धानि भूयांसि मौक्तिकाभानि नक्षत्रानियस्यां तथा अतिशयेनजयसूचकां जयातिथित्वात् उक्तं च जयाजयकरीप्रोक्ते ति १२

कलितसकलबिंबकालिमेव विलसति
यत्पुरतो निधिः कलानाम् ।
शिशुरविरपि पांडुरायते तत्
मृडमहसाथ तदीयमास्यमासीत् ॥ १३ ॥

पूर्वं समस्त देवतेजोभ्योमिलितेभ्यो महालक्ष्मीः प्रादुर्भूतेत्युक्तं संप्रति कस्य कस्य तेजसा किं किमंगमासीदिति तेजोविभागैरंगविभागमाह ताव-च्छिवस्यतेजसातन्मुखं जातमित्याह "कलितेति" अथ मृडस्य शिवस्य महसा तदीयं तत् आस्यं मुखं आसीत् तत्किं यस्य पुरतः अग्रेकलानां निधिश्चन्द्रः कलितः गृहीतः सकले एव बिंबेकालिमा कृष्णत्वंयेन तादृशः सन् विलसति अयंभावः यन्मुखस्यगौरिमाग्रे बिंबस्यैकदेशेपिकलंकवान् चन्द्रः सकलेपि बिंबे कलंकाच्छादितोभाति यद्गौरिमाग्रे चन्द्रोपि कृष्णीभूतो भातीतितात्पर्यं यद्गौ-रत्वोद्रेकमुक्त्वारक्तत्वोद्रेकमाह शिशुरविः बालसूर्योपि यदग्रे पाण्डुरायते धूसर इवभाति अतिशयोक्तिरलंकारः ॥ १३ ॥

अथ सितमहसा पुरा पुरारेः किं
मु तमसा जरितेन कालिमापे।
प्रकृतिरथ निजाप्यभाजि कार्ष्ण्यं
किमु वदनीभवता विसृज्य केशे ॥ १४ ॥

ननुकृष्णवर्णात् शंभोस्तेजसः गौरवर्णं मुखं कथं जातमिति तर्कयन्नाह "अथेति" अथतितर्के किं पुरापूर्वं पुरारेः शिवस्य सितेनमहसा पश्चात् तमसा तमोगुणेन कृत्वाजरितेन आच्छादितेन कालिमाकृष्णत्वं आप प्राप्तं पूर्वंतुशंभोर्गौरत्वाद्गौरमेव तेजउदभूत् पश्चात्तस्थि तमोगुणाच्छादितं सत् कृष्णत्वं प्रापेति भावः अथ पश्चात् किंतेनैव कृष्णीभूतेनसितमहसा तस्यावदनी भवतानिजागौरत्वरूपा स्वकीयाप्रकृतिरपि अभाजिप्राप्ता पुनर्गौरमेवाभवदित्यर्थः ननुकार्ष्ण्यं क्वगतमित्यत आह किं कृत्वा तत् तमश्छादनजन्यं कार्ष्ण्यंकेशे इति जातावेकवचनंकेशेष्वित्यर्थः विसृज्यदत्वा अत्रैवोपमानमपि गूढं तथाहि यथासितं महो यस्यतेन चन्द्रेण पूर्वंसितेनापि पश्चात् तमसाराहुणाजरितेनग्रस्तेन कृष्णत्वंप्राप्यते पश्चाच्च तत्यक्तेन निजागौरत्व रूपाप्रकृतिरपि प्राप्यते तद्वदित्यर्थः पूर्वरूपालंकारः ॥ १४ ॥

त्रितयमथ दृशां तदीयमासीच्छु
चिमहसा यदसौ त्रिधा प्रसिद्धः।
प्रकृतिमसृणमेव यत्तदस्मिन्नु
करुणाप्यभवत् फलानुमेया ॥ १५ ॥

अथ नेत्रत्रयमग्नितेजसा जातमित्याह "त्रितयमिति" अथ तदीयं दृशां त्रितयं शुचेः अग्नेर्महसाऽऽसीत् नन्वन्यस्य तेजसा किंनाभूदित्याह यत् यस्मात् असौ अग्निः त्रिधादक्षिणाग्न्यादि भेदेनत्रिविधः प्रसिद्धः तदेववर्णयति यत् यस्मात् तत् नेत्रत्रयं प्रकृत्यैवमसृणं स्निग्धं आसीत् तत्तस्मात् अस्मिन् नेत्रत्रये उरुर्भूयसीकरुणापि फलेनअनुमातुंयोग्या अभवत् अयं भावः सदैवस्निग्धत्वात् तस्मिन् करुणारसकृता पृथक् स्निग्धतानैवालक्षि किंतु तस्याः करुणायाः सेष्ट प्राप्तिरूपफलेन करुणाख्या जातेत्यनुमानादेव मालक्षिमीलितालंकारः ॥ १५ ॥

कुवलयमिदमेव मुख्यमूह्यं नियतिकृतास्यदलीलतारकालि।
इतरदथ तदीयंशयेव भृङ्गं सुरभितयापरिलोभ्य जातभक्ते १६

"कुवलयमिति" इदंनेत्रद्वयमेव मुख्यं कुवलयं कमलं जह्यं तर्कनीयं कुतइत्याह कीदृशं नेत्रद्वयं मियत्यानियमेन क्षतः आस्वदोयेन एतादृशः तारकाकनीनिका रूपः अलिर्भ्रमरो यत्र तर्हिलोके प्रसिद्धं कमलं किमस्तीत्याह अथ इतरत् लोकप्रसिद्धंतु कमलं तस्यनेत्रद्वयरूपकमलस्य ईर्ष्यया असूययेव भृङ्गंभ्रमरं स्वसुरभितया गंधेन परिलोभ्यस्वस्मिन् धत्ते तथापि जातुकदाचिदेव नतुतद्वत्सर्वदैवेतिभावः अतएव तद्गुणग्राहकत्वात्तन्नीर्णमिति ध्वनितं अन्योऽपि गोणः मुखोनराजादिना सह ईर्ष्यया अन्यान् जनान् धनादिना परिलोभ्य कदाचित् स्वसनृपतां दर्शयति तारकाऽक्ष्णः कनीनिकेत्यमरः॥ १६॥

यद्भवद्थ संध्ययो रुचा भ्रू युगलमनंगशरासजैत्रमस्याः।
वदनचिकुरयोस्तदन्तरे तद्दिननिशयोरिव सर्वदा विभाति १७

अथ सन्ध्ययोस्तेजसाभ्रुवौजाते इत्याह "यदिति" अथ यत् यस्मात् संध्ययोः रुचातेजसा अस्याः महालक्ष्म्याः भ्रुवोर्युगलं अभवत् कीदृशं अनंगस्य कामस्य शरासनं धनुर्जेतुं शीलमस्य तत्तस्मात् तस्यामुखकेशयोः दिननिशयोरिव अंतरे मध्ये तत् सर्वदाविभाति सन्ध्येहि दिन निशयोर्मध्ये भातः॥ १७॥

अथ शुचिसखितेजसा तदीय श्रुतियुगलीभवतापि मंजुलेन।
शुचिरुचिजनिताक्षिसख्यमापे पुनरपि तेन
सतामहो सुहृत्त्वम्॥ १८॥

अथ वायुतेजसातिकर्णौ जाताविस्याह "अथेति" अतिसुन्दरेण शुचेरग्नेः सखावायुस्तस्यतेजसा तस्याः श्रुतियुगलीभवतापि अवस्थांतरं प्राप्तेनापि पुनरपि अग्नितेजसाजनितयोः अक्ष्णोः सख्यं मित्रता तेन आपे प्राप्तं अहो आश्चर्यं सत्पुरुषाणां सुहृत्वमविचिन्त्यमितिशेषः अयंभावः अग्निवायोर्मिथः सुहृत्वात् अग्नितेजसा जनितयोर्नेत्रयोर्वायुतेजो जनितकर्णयुग प्रणयित्वात्तत्कार्ययोरपि तेजसोस्तत्रापिमिथः सुहृत्त्वंजातं आकर्णलोचनासेत्यर्थः॥ १८॥

निजसखिशिखिनः स पाशिशचो
विजयकृते स्वमहो द्विधा विभज्य।
व्यरचयद्थ पाश युग्मकं किं
श्रुतियुगलं च्छिदुरेतरं समीरः॥ १९॥

"निर्जेति" अथ सः समीरोवायुः निजतेजोद्विधाविभज्य तत् श्रुतियुगलं किंच्छिदुरेतरं दृढं पाशयुग्मकं व्यरचयत् तस्य पाशाकृतित्वात् कस्मै पाशितः पाशभृतः वरुणस्य शत्रोः निजसख्युः शिखिनः अग्नेः विजयकृते विजयार्थं अयं भावः वायुनेति विचारितं मम मित्रस्याग्नेः शत्रुः वरुणोस्ति तस्यमुख्यंशस्त्रं पाशएव अतोहं दृढंपाशद्वयं स्वमित्रविजयार्थं रचयामि शीलार्थेच्छिदे: कुरः छिदुर इति । १९ ।

स्फुटधृतमणिसंघमेकगम्यं निजजनदीनसरस्वतीततीनाम्।
विलसति यदिदं तु सप्तकांकाकृति किमुसप्त विजेतुमं
बुराशीन् ॥ २० ॥

"स्फुटेति" इदंश्रुतियुगलं यत् यस्मात् सप्तेति योंकः तद्वत् आकृतिर्यस्य तादृशं सत् विलसति तत्किं सप्तसंख्याकान् अंबुराशीन् समुद्रान् जेतुं विलसति उभयोः सप्तांकयोर्योगे चतुर्दशभवन्ति द्विगुणाद्वि निजार्थान् जयन्तीतिभावः अन्यदपि जयकारणमाह कीदृशं श्रुतियुगलं स्फुटंप्रकटमेव धृतोमणिसंघोयेन समुद्रास्तु गूढ धृतमणयः अतोविशेषः तथा निजजनानां स्वभक्तानां दीनायाः सरस्वती ततयः वाणीसंहतयः तासां एकं गम्यस्थानम् समुद्रास्तु महतीनां सरस्वतीततीनां नदीपंक्तीनां गम्याः नतुदीनानां क्षुद्रनदीनामपि महत्त्वं हि दीनानां अयणात् भवति नतुमहतामिति भावः । २० ।

अथ लसति तदन्तरे किमष्टादशनिगमस्थितिसूचको नवाङ्कः ।
अवरतवसतेः किमत्र वेदः श्रुतिरिति लाक्षणिकं पदं प्रपेदे २१

"अथेति" अथ तस्य श्रुति युगलस्य अन्तरेमध्येयोनवाङ्काकारः स किं अष्टादशानां निगमानां विद्यानां स्थितेः सूचकोलसति कर्णमध्येहिनवांकाकृतिर्दृश्यते द्विगुणितास्वनव अष्टादशभवन्ति अष्टादश विद्यास्तूक्ताः पुराण न्याय मीमांसा धर्मशास्त्रांग मिश्रितः वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्धशेति चतुर्दश आयुर्वेदो धनुर्वेदो गान्धर्वं चार्थ शास्त्रकमिति च तिस्रः अथ किं अत्र श्रुतियुगले अवरतवसतेः निरंतरनिवासात् वेदः श्रुतिरिति पदं लाक्षणिकं प्रपेदे लक्षणाया आश्रयं लाक्षणिकं लक्षणाशक्यसंबंधः तदुक्तं मुख्यार्थबाधे तद्योगे रूढितोथ प्रयोजनात् अन्योर्थोलक्ष्यते यत्सालक्षणारोपिताक्रियेति अत्र त्वयं भावः श्रुतिपदवाच्यं तत्कर्णद्वयं तत्संबंधात् वेदोपि श्रुतितान्नाभजते श्रुतिरवप्रमाणमित्यादि स्थलेप्रमाणेन कर्णयुगस्यानन्वयात्

वेदेएवलक्षणाकार्येति पूर्वंतु वेदस्य एवेद वनामाभूत् ततस्तस्याः श्रुतिबुग संयोगात्तेन श्रुतिरिति नामलक्षणया प्राप्तमिति स्वीकृततात्पर्यं भगवतीहि शिव मुखात्सर्वाणि शास्त्राण्यशृणोत् अत्र च शक्यार्थो परित्यागादजहल्लक्षणावो ध्व्यायथा मंचाःक्रोशंतोत्यादौ श्रुतिः श्रोत्रे च तत्कमंख्याम्नायवार्त्तयोः स्त्रियामिति विश्वः । २१ ।

अथ पितृपतितेजसाति कृष्णाः
कुटिलतरास्तनवोति दैर्घ्यभाजः ।
मृदि मम सृणताजुषो निसर्गा
च्चिकुरचया वरसौरभा अभूवन् ॥ २२ ॥

अथ यमतेजसा केशाजाता इत्याह "अथेति" पितृपतेर्यमस्य तेजसा तस्याः केशसमूहा अभूवन् कीदृशाः अतिशयेन कृष्णाः तथा अतिकुटिलाः तथा तनवः सूक्ष्माः तथा अतिदीर्घाः तथानिसर्गादेवमृदिमानं मृदुत्वं मसृणतां स्निग्धतांचजुषंतीतिते तथानिसर्गादेववरं सौरभंयेषुते अन्यासांतुकृत्रिमस्नेहादिना कोमलाः स्निग्धाः सुगंधयश्चकेशाभवंति तस्यास्तु स्वभावादेवेति विशेषः ॥ २२ ॥

कथमिव तुलयंति कुंतलांस्तत्कचनियमेन मनीषिणश्चमर्य्याः ।
कचसु सुरभि तेह तानवं क्व क्व च मसृणत्वमथ
क्वतेषु कार्ष्ण्यम् ॥ २३ ॥

"कथमिति" मनीषिणः कवयः तस्याः केशसमूहेन सह चमर्या केशान् कथमिव केन प्रकारेण तुलयंति इति न विद्मः कुतः इहचमरीकेशेषु तादृक् यादृशी तत्केशेषु तादृशी सुरभिताक्वास्ति अथ च तादृशं तानवं सूक्ष्मताक्वास्ति तादृशं च मसृणत्वंक्वास्ति अपि च तादृशं कार्ष्ण्यंक्वास्ति नक्वापीत्यर्थः । २३ ।

जगति हृदि कलाप एष मुख्यः
शिरसिरुहां भुजगाशिनस्तु गौणः ।
विजितविधुविभं बिभर्ति चूडा
मणिमयमल्पमतोपि चन्द्रकं सः ॥ २४ ॥

"जगतीति" एषः शिरसिरुहां तस्याः केशानां कलापः समूहः ममहृदि

मुख्योलगति भाति भुजगाशिनः मयूरस्य तु कलापः वर्हः गौणः भाति कुत इत्याह अयं केशसमूहः विजिताविधोश्चन्द्रस्य विभाकान्तिर्येन तादृशं चूडा मणिं शिरोरत्नं विभर्त्ति सः मयूरस्य वर्हस्तु अतश्चन्द्रक इति निरुक्तः कलापः संहतीकाश्चावर्हभूषणतूणयोरित्यजयः । २४ ।

तिलकुसुमसदृक्तदीयनासोभवदपि मंजुलराजराजतेजः ।
अजहदथ न राजराजतां तत्परिजुषते हि यदंशिम स्वराजा ॥

अथ कुवेरतेजसानासाजातेत्याह "तिलेति" अथ मंजुलं राज राजस्य कुवेरस्य तेजः तिलकुसुमेन सदृशीयातदीयानासा तां संपद्यमानमपि स्वकीयां राज राजतां न अजहत् नात्यजत् कुत इत्याह हियतः यस्य तन्नासोभवतः राज राजतेजसः अंशिभूतं आस्यंमुखमेव राजाचन्द्रः परिजुषते सेवते अयमर्थः राजराजो हि स भवति यदं शिमितरे राजानः सेवंते तथात्रापि मुखरूपराज-स्तदंशिसेवनात्पुनरपि तस्य राजराजतानचीणा राजा प्रभौ च नृपतौ चत्रिये रजनीपतौ यचेशक्रे च पुंसिस्यादिति विश्वः । २५ ।

किमु समररथं स्मरो व्यधात्तां मलयजनिश्वसनां विजेतुमीशम् ।
नयनझषयुगं तु पार्श्वयोस्तद्धुरि च जवाय विधाय धुर्य्यमेकम् २६

"किम्विति" तांनासांस्मरः कामः किं समरस्य युद्धस्य रथंव्यधात् किं कर्त्तुं स्वशत्रुं ईशं विजेतुं रथरूपतामिवाह कीदृशीं मलयजश्चन्दनः तद्वत्सुगं-धिनिश्वसनं यस्यां कामस्यापि मलया च लाज्जनिर्यस्य तस्यश्वसनस्य वा-योर्युद्दयोऽभिहितः श्री शंकराचार्यैः वसंतः सामन्तो मलयमरुदायोधनरथ इति स्मरस्येति शेषः ननु रथस्तु सम्पन्नः परमश्ववाहः केत्यपेचायामाह किं कृत्वा तस्यानयन हयरूपंझषयुगं मीनयुग्मं नासारूपरथस्य पार्श्वयोः धुर्यं विधाय अथेशंशोभंजेतुकामः कामस्तथापितं रथंमंथरं वीक्ष्य जवाय तस्याति वेगाय एकंललाटसंबंधिनं तृतीयं नेत्ररूपं मीनंतु धुरि अग्रे धुर्यविधाय अय-माशयः यस्य यद्वाहनं भवति तदेवस्य रथाग्रेयोजयति कामस्य तु मीनवाहन-त्वात्मी नानामेवरथाग्रे योजनंयुक्तं नेत्राणां च चञ्चलत्वान्मीनसाम्यम् । २६ ।

ज्वलदरुणिमसौकुमार्य्यधुर्य्यावभिनवविद्रुमपल्लवाभिमल्लौ ।
स्फुटमरुणकुमारयोर्महोभ्यामथ जनितावधरोत्तरौ तदोष्ठौ ॥

अथारुणतेजसाऽधरोष्टःकुमारतेजसाचोत्तरोष्टोजातइत्याह "ज्वलदिति" अथ अरुणकुमारयोस्तेजोभ्यां तस्याः अधरोत्तरौ ओष्टौजातौ कीदृशौ ज्वलतः

प्रकाशमानस्य अरुणिम्नः शोणत्वस्य सौकुमार्यस्य कोमलत्वस्य च धुरंवहतः इतितौ अरुणकुमारयोस्तेजोभ्यां जनितत्वादितिध्वनिः तथा अभिनवयोः पल्लवविद्रुमयोः अभिमन्नौ प्रतिभटौ अरुणत्वात् कोमलत्वाच्च । २७ ।

विमलतरतनुः सदा सदुक्तिस्फु,
टितरुचिर्विशदांशुका द्विजालिः ।
श्रुतिगुणवसुसंमिता तदीया
समजनि सा महसा प्रजापतीनाम् ॥ २८ ॥

अथ प्रजापतीनांतेजसादंताजाता इत्याह "विमलेति" अथ प्रजापतीनां दक्षादीनां तेजसाःतस्यद्विजानां दन्तानां आलिःपंक्तिस्समजनि जाता कीदृशो विमलतराचतनुः सूक्ष्माचेति कर्मधारयः तथा सदैव सदुक्तिसमये स्फुटिता प्रकटीभूता रुचिः शोभायस्याः तथाविशदा अंशुकाः किरणायस्याः तथाश्रुति भिश्चतुर्भिर्गुणितैर्वसुभिरष्टभिर्द्वात्रिंशद्भिरित्यर्थः संमिता अथाप्रस्तुतार्थः अथ दक्षादौ प्रजापतीनां तेजसा द्विजालिः ब्राह्मण पंक्तिर्जाता कीदृशो विमलतरा तपोभिः पापमलविहीना तनुः शरीरंयस्याः तथा सदैव सदुक्तिभिः सिद्धांतप्रतिपादकाःक्तिभिः प्रकटिताशोभायस्याः तथा विशदानि अंशुकानि वासांसि यस्याः तथा श्रुतयोवेदाः गुणामैत्रीमर्यादादयः तएववसूनिधनानितैः संमिता संमानिता ब्राह्मणानांहिविद्येवधनं दंतविप्रांडजाद्विजा इत्यमरः २८

अथ रुचमिव लिप्सु,चैतदीयां तपसि सदा रतमस्ति कुन्दवृन्दम् ।
विधुरपि निजचन्द्रिकां ह्रियेवस्थगयति तद्रु,चिनिर्जितां मुहुः सः ॥ २९ ॥

"अथेति" अथ च एतद्दंतसंबंधिनीं रुचंकान्तिं लिप्सु इव कुन्दानां वृन्दं सदैव तपसिमाघेरतमस्ति कुन्दंहिमाघेजायते अन्योप्युच्च पदवींवांच्छन् तपसि रतोभवति अथ स चन्द्रोपि तेषां दन्तानां रुच्यानिर्जितां निजचन्द्रिकां ह्रिया-लज्जयेव मुहुः पुनः पुनः स्थगयति तिरोधत्ते कृष्णपक्षे इति शेषः माघ्यंकुन्दमित्यमरः । २९ ।

अथ महसि निजे हरिस्तदृष्टादशभुजनिर्मितये चतुर्भुजोत्थम् ।
निखिलमपि दशावतारजन्यं त्रिभुवनजं किममिश्रयच्चसारम् ॥

अथ विष्णुतेजसातदष्टादशभुजाजाता इत्याह "अथेति" हरिर्विष्णुः तस्य अष्टादश भुजरचनार्थं निजेमहसि चतुर्भुजोत्थसारं तथानिखिलं दशावतारजन्यंसारं तथा त्रिभुवनजन्यं च सारं बलं किं अमिश्रयत् मिश्रितवान् अयं भावः हरिणेतिचिन्तितं केवलेन मम तेजसा ऽस्या अष्टादश भुजानां निर्मितिर्दुर्घटास्ति अतः प्रतेकभुजपर्याप्तये एकं स्वतेजः चत्वारि च भुजाः दशचावताराः भुवनानां च त्रयं एवं कृत्वा जाता अष्टादश एषां सारैस्तस्या भुजान् निरमात् । ३० ।

तदनु वसुमहः करांगुलीनां नवतिमजीजनदल्पपर्वसंधिम् ।
प्रतिकरमपि या करायफालैर्मनसिजयंचशरीश्रियं बभार ३१

अथ वसूनांतेजसा तत्करांगुल्योजाता इत्याह "तदन्विति" तत्पश्चात् वसूनांमहः तस्याः करांगुलीनांनवतिं अजीजनत् उत्पादितवत् एकस्मिन् भुजेहि पञ्चांगुल्योभवन्ति पञ्चगुणिताअष्टादश नवतिर्भवति कीदृशीमंगुलिनवतिं अल्पाः सूक्ष्माः पर्वणां संधयोयस्याः याचनवतिः प्रतिकरंकराग्रानखाएव फालाः तैरुपलक्षितासती मनसिजस्य कामस्य पञ्चशर्याः श्रियंशोभांबभार पञ्चानां शराणां समाहारः पञ्चशरी अकारांतोत्तरपदो द्विगुः स्त्रियामिष्ट इतिङीप् । ३१ ।

उपचयमनु चापचीयमानं किमुनिजधाम सुधामयो विलोक्य ।
तदुपचितिकृतेथ तेन तेने स्तनयुगलं विमलांशुकं तदीयम् ३२

अथ चन्द्रतेजसास्तनौजाताविल्याह "उपचयमिति" सुधामयश्चन्द्रः किं निजंधामतेजः सितदलेक्रमात् उपचयं वृद्धिंप्राप्य तदनुअसि तदले अपचीयमानं क्षीणतां प्राप्नुवन् विलोक्य अथतस्यतेजसोनितरां उपचितिकृते वृद्ध्यर्थं तेनतेजसा तदीयंस्तनयुगलं तेनेविस्तारयामास निर्ममावितियावत् कीदृशं विमलं अंशुकंवासो यस्मिन् धामपक्षेतु विमला अंशुकाः किरणायस्मेति स्वार्थेकन् अयंभावः चंद्रेणेत्यालोचितं ममतेजः सदावर्द्धतेक्षीयतेचेतिकष्टं अथास्याः स्तनीभूतंतुनितरां वर्द्धिष्यते नतुपुनः क्षयिष्यतीतिमत्वातत्स्तनौनिरमात् । ३२ ।

करिपरिदृढकुंभतस्तदीयाकृतिमसृतं त्वखिलं श्रिया समेतम् ।
सुखमथ ललना च गौरिमाणं सुरभिसुरद्रुमतस्तु
कामदत्वम् ॥ ३३ ॥

करोत्यादिभिस्त्रिभिः कुलकम् तावत्तृतीयपद्यपादत्रयव्याख्या इन्दुः चन्द्रः इत्थं पूर्वोक्त प्रकारेण चोरोदमंथनोत्थात् निजसहजकुलात् तस्मिन् यद्यत् गुण सारंतत्तद्गृहीत्वा कथमपि महतायत्नेन मृदुभिः करैः कृत्वा किं तदीयंकुच युगलं निर्ममौ अयंभावः चंद्रेणेतिव्यवसितं केवलेनमत्तो जसाऽस्याः कुचयुगं निर्मातुमशक्यं अतोऽन्येभ्योपि गुणसारं गृहीत्वा रचयामि किंचान्येभ्यायाच् अयाग्रहणंहास्यास्पदमतः चोरोदोत्थितेभ्य ऐरावतादिभ्यस्त्वयैदश निज सहजेभ्य एतार्थयित्वा गुणसार ग्रहणं युक्तं अन्यापि अतिमनोज्ञं वस्तुनिर्मातु कामः स्वबन्धूनपि सहायोकृत्य कथमपि मंदं मंदं कोमलैर्हस्तैः कृत्वारचयति अथकस्मात्किं किं गुणसारं जग्राहेत्याह "करीति" करिषु परिवृढस्यनायकस्य ऐरावतस्य कुम्भाभ्यां तदीयांकुचयुगसम्बंधिनीं आकृतिं गृहीत्वा अन्योपि कुलालादिः घटादिकं रचयन् तावन्मृदादिभिराकृतिमात्रं रचयति अथ अमृतं-तुनिखिलमेव गृहीत्वा सर्वस्यापि सारभूतत्वात् कोदृशं श्रियालक्ष्म्याश्लेषेण शोभयेत्यर्थः समेतंयुक्तं शोभामपि समग्रामेव गृहीत्वेत्यर्थः अथ जलजात् पाञ्चजन्यशङ्खात् मुखंगौरिमाणं च गृहीत्वा शङ्खस्यहिमुखवत्कुचमुखं भवति अथ सुरभिः कामधेनुः सुरद्रुमः कल्पवृक्षः ताभ्यां कामदत्तं अभिलषितार्थ दत्तं भवतुस्मरदत्वंवोध्यम् नचात्रजगज्जनन्याः स्तनयोः स्मरदत्वमनुचितमिति भ्रांतिर्विधेया शृङ्गारवर्णनावसरेतस्यौचित्यात् तथैव सौंदर्यलहर्यां श्री शंकरे-भगवत्याः प्रत्यंगमनंगदत्वं वर्णितम् । ३३ ।

धनुष उरुकठोरतां सहालादपि
च हलाहलतो ऽरिमोहदत्वम् ।
कुतकयुत्तविनर्तनं तुरङ्गान्मणि
वरतो रमणीयतां सरम्यात् ॥ ३४ ॥

"धनुषइति" धनुषः शार्ङ्गाख्यात् उरुकठोरतां अतिकठिनतां तथा हालयामदिरयासहितात् हलाहलतः कालकूटविषात् अरीणां दैत्यानां मोह दत्वं तद्दर्शनेनहिमहिषादीनां मोहोभविष्यति विषमपि जनंमूढंकरोति तथा सुरापि अथ तुरङ्गादुच्चैः श्रवसः कुतकेनकुतूहलेनयुतंयद्विनतान तथा रम्भयाऽप्सरोभिस्सहितात् मणिवरतः कौस्तुभाख्यात् रमणीयतां सुराहलि प्रियाहालेत्यमरः । ३४ ।

अमरनगपहंत्रता दुग्धवेद्यात्सहजकुलाद्गुणसार मित्थ मिंदुः ।

कथमपि स्वदृग्भिः करैर्गृहीत्वा कुचयुगलं किमुनिर्ममौ
तदीयम् ॥ ३५ ॥

"अमरेति" दिवः स्वर्गस्यवैद्यात् धन्वन्तरितः देवज्वरनाशकतां च गृहीत्वा तस्याः कुचयुगं किं विधुर्निर्ममावितिपूर्ववदन्वयः चतुर्दशरत्नैः घटितं तत्च युगमिति पर्यवसनम् चतुर्दशरत्नानितूक्तानि मंगलाष्टके लक्ष्मीकौस्तुभपारिजाततरवीरम्भादि देवांगना धेनुःकामदुघासुरास्सुरगजो धन्वन्तरिश्चन्द्रमाः अश्वः सप्तमुखोहिरण्यनिचयः शङ्खोविषंचामृतं रत्नानीति चतुर्दश प्रतिदिनं कुर्वन्तु ते मङ्गलमिति । ३५ ।

अथ सुरपतिर्विवर्तं तेजसास्यास्तम जनितत्रिवलीयुता वलग्नम् ।
हरिरपि तन्निरीक्ष्य यत्स्वदृग्भिः क्व मम महोगतमित्य
भूत्सचित्रः ॥ ३६ ॥

अथेन्द्रतेजसामध्यंजातमित्याह "अथेति" सुरपतेरिन्द्रस्य चित्रवर्णेन तेजसा अस्याः तत् त्रिवलोभिर्युतं अवलग्नंमध्यं जनितं तत्किंयत्मध्यं हरिरिन्द्रोपि सहस्रमिताभिः स्वदृग्भिः ननिरीक्ष्य अतिसूक्ष्मत्वादृष्ट्वा मम तेजः कुत्र गतं इति स चित्रः साश्चर्यः अभूत् चित्रतेजसस्तस्योत्पत्तेचित्रो कार्यं युक्तमेवेति भावः अतिसूक्ष्ममध्याजातेति निष्कर्षः वलीतिकृदिकारत्वादीप् मध्यमञ्चावलग्नंचेत्यमरः ॥ ३६ ॥

कथितमथ च केनचित्तु मध्यं तव महसाजनि भो स्तदेवनास्ति ।
स्थितिरथ कुचयोः कथं न तच्चेद्यदघटनाघटनापटीयसीयम् ३७

"कथितमिति" अथ मम तेजः क्वगतमिति चित्रीभूतमिन्द्रं प्रतिदेवमध्ये केनचिद्देवेन कथितं हे इन्द्र तवमहसा अस्यामध्यंअजनि जातं अथेन्द्रो ब्रूते भो देव यन्मध्यंगदसि तदेवनास्ति यद्यभविष्यत् तदेतरांगवदद्रक्ष्यत् न दृश्यते ऽतोनास्तीत्यनुपलब्ध्यातदभाव एवेति भावः अथ पुनर्देवेनोक्तं हे इन्द्र यदि तन्मध्यंनस्यात तर्हिकुचयोः स्थितिः कथंस्यात् अयंभावः यथापीनोदेवदत्तो दिवान भुंक्ते इत्यत्र दिवाऽभुंजानस्य देवदत्तस्य रात्रिभोजनं विनाऽनुपपद्यमानपीनत्वज्ञानात्तदुपपादकरात्रिभोजनमर्थापत्त्याकल्प्यते तथात्रापि मध्यं विनानुपपद्यमानातिपीनकुच स्थितिज्ञानात्तदुपपादक मध्यसंभवोऽर्थापत्याः वश्यं कल्पनीयः अथेत्यभिहितं इन्द्रोब्रूते हे देव यत् यस्मात् इयं महामाया अघटनायायाघटना तस्यां पटीयसी अतिचतुरास्ति अघटन घटना पटीयसी;

मायायां किं न सम्भवतीत्यतो मध्यं विना कुचस्थितेरसम्भव उपपन्न इतिभावः अत्र तन्मध्यातितानवं वर्णयितुं देवकृत प्रश्नोत्तराभ्यां तदभाव एवकविनाभिहितः ॥ ३७ ॥

धरणिरपि च धाम्नि चारुणि स्वे
निजगुरुतामथ विस्तृतिं च सर्वाम्
प्रमुदितहृदया नियोज्य तस्मिन्
विरचयति स्म नितंबमंबिकायाः ॥ ३८ ॥

अथ पृथ्वीतेजसानितम्बोजात इत्याह "धरणिरिति" भूमिरपि प्रमुदित हृदयासती सुन्दरेस्वेतेजसि स्वकीयां सर्वामेव गुरुतां विस्तृतिं च नियोज्य अंबिकायाः नितंबंकटिपश्चाद्भागं विरचयति स्म अतएव तस्यानितंबः गुर्वविस्तृतश्च जात इति भावः इदानीं दुष्टजनाति भारो मत्तो ऽवतिरिष्यतीति प्रमुदित हृदयेत्युक्तम् ॥ ३८ ॥

वरुणरुगपि सक्थिनी सुजंघे रुचिरतरे रुरुचे भवत्यमुष्याः।
अपि कलितुमना मनागस्यदाभां विजनवने कदलीतपस्यतीव३९

अथ वरुण तेजसा जंघोरूजातावित्याह "वरुणरुगिति" अथ वरुणस्यापिरुक् अस्याः जंघाभ्यां सहिते सक्थिनी ऊरूभवतीसतीरुरुचे कोदृशेतेद्वे अति रुचिरे ययोः स जंघयोः ऊर्वोः मनाक् स्वल्पामपि आभां गृहीतुकामा कदली विजनेवने तपस्यतीव तपः करोतीवेत्युत्प्रेक्षा सक्थिक्लीबेपुमानूरुरित्यमरः ३९

अथ विधिमहसा तदीयपादौ समभवतां जतुना विनापि रक्तौ
लवमिव समवाप्ययन्मृदिम्नः किसलयमापन पल्लवाभिधत्वम्४०

अथ ब्रह्मतेजसापादौ जातावित्याह "अथेति" ब्रह्मणोमहसातदीयौ पादौ समभवतां कीदृशौलाक्षयाविनापि प्रकृत्यैवरक्तौ अथ च ययोः कोमलतायाः लवंलेशमिव प्राप्यकिसलयं पल्लवाभिधत्वं आपतप्राप पदोर्लवः पल्लव इति निरुक्तेः अत्र लाक्षारसावसेक कारणा भावेपि रक्तिम्नः कार्यस्योत्पत्तेर्विभावनालंकारःउत्तरत्र श्लेषमूलोत्प्रेक्षा अनयोस्यातिलतंडुलन्यायेनसंसृष्टिः४०

रुचिररुचिगतैश्च तावधस्ता द्यदकुरुतां नलिनं तथा मरालम्।
नहि तदिदमसंगतं विधातोपरि हि यदब्जमरालयोस्सदास्ते॥

"रुचिरेति" तौ पादौ यस्मात् रुचिरया रुचा गतेर्गमनेश्च नलिनंकमलं मरालं हंसं च अधस्तात् अकुरुतां रुचाकमलं गतेश्चहंसं स्तौल्कर्षात् यदध-श्चक्रतुः तदिदं असंगतं अयुक्तं नास्ति कुत इत्याह यतः अनयोः पादयोर्विधा-ता कर्त्ताविधाताब्रह्मैव कमलहंसयोरुपरिसदैव आस्ते आसीनोस्ति कमला-सनत्वात् हंसवाहनत्वाच्च इदमचस्थारस्यं तयोः कारणं ब्रह्मैवतावधश्चकरोति तत्कार्यं किमुनकुर्यात् कार्येहि कारण गुणा दृश्यंते ॥ ४१ ॥

अथ समजनि तिग्मधामधाम्ना म्रदुलतरं दशकं तदंगुलीनाम्।
पृथगिव स विभज्ययत्रभास्वान्निजकिरणांश्च शतं शतं ससर्ज्ज॥

अथ सूर्यतेजसापादांगुल्योजाता इत्याह "अथेति" सूर्यतेजसा तस्याः पादांगुलीनांदशकंजनितं कोदृशं अतिकोमलं यत्रांगुलीदशके स सूर्यः एका-मेकामंगुलिंप्रति सहस्रमितान् किरणान् पृथक् विभज्य विभागं कृत्वेव शतं शतं ससर्ज ॥ ४२ ॥

दशविदशसु रवेरवैमि नूनं तनुषु दशैव कृतार्थतां प्रयाताः।
यदिह परिणता नखात्मना श्रीचरणसरोजयुगं सदा जुषंते४३

"दशेति" द्वादशसुरवेर्मूर्त्तिषु दशैवमूर्तयः कृतार्थतांप्रयाताः इत्यहंजाने यद्यस्मात् इहदशस्वंगुलिषु नखात्मना परिणामं प्राप्तास्ताः दश मूर्त्तयः श्रि-योमहालक्ष्म्याश्चरण कमल युग्मं सदासेवंते ॥ ४३ ॥

इति रुचिरतरां प्रतिप्रतीकं चि-
दिवसदः समुदीक्ष्य तां तदानीम्।
स्वयमपि च निजानुभूतिमेयं
मुदतिशयं न हि वक्तु मीशिरे ते ॥ ४४ ॥

तदंगसं भवमुपसंहरन्नाह "इतोति" ते देवाः इत्यमुनाप्रकारेण प्रत्यंगंतां भगवतीं तदानीं अतिरुचिरांवीक्ष्य ततोजातं मुदतिशयं आनन्दभरंस्वयमपि वक्तुं न ईशिरेईदृश आनन्दो जात इति वक्तुं न समर्था अभूवन्नित्यर्थः कतर्हि-मादृशः कथयेदिति कवेस्तात्पर्यं कोमुदतिशयं स्वानुभवमात्रेणमेयं अनुमातुं योग्यम् ॥ ४४ ॥

हरिरथ निखिलाज्जगाद्गाधेनरसुदन्वति निर्भरं निमज्जन्
कुरुत सफलतां स्वभूषणानां धुरि जगतामुपढौकनाज्जनन्याः

"हरिरिति" अथ विष्णुः तांवीक्ष्येतिपूर्वतोनुवर्त्तनीयं गाधेतरे अगाधे मुदुदन्वति आनन्दसमुद्रे निर्भरंगाढं गिमज्जन् सन् निखिलान् देवान् जगाद हे देवाः जगतांजनन्याः धुरिअग्ने उपढौकनात् अर्पणात् स्वभूषणानां सफलतां कुरुत ननुभूषणार्पणाद्भवतातस्याः शिरसिकश्चनोपकारोस्ति किंतु स्वभूषणानामेव साफल्यं भविष्यतीति भावः उदन्वानुदधिः सिन्धुरित्यमरः ॥ ४५ ॥

**द्युतिविजितविद्युतिं स चूडामणिमसृजन्मुदितोथ विश्वकर्मा**
**शिरसि भगवती स्वयं दधौ यं गदितु मिहार्हति**
**तस्य कः प्रभावम् ॥ ४६ ॥**

अथ विष्णुकथनानन्तरं ओमित्युक्तवत्सुसुरेषु तावन्निखिल शिल्पकला कुशलो विश्वकर्मैवभूषणान्यर्पयदित्याह "द्युतीति" अथ विश्वकर्मा मुदितः सन् द्युत्याविजिताविधोर्द्युतिर्येन तं चूडामणिं असृजत् ददौ तस्यै इति शेषः यं चूडामणिं भगवती स्वयंशिरसि दधौ धृतवती तस्य प्रभावं इहगदितुं कः अर्हति योग्योभवति नकोपीत्यर्थः ॥ ४६ ॥

**खचितमणिचये च कुण्डले द्वे तडिदधिकद्युतिनो श्रितश्रिणीये श्रुतियुगमधिगत्य तन्मुखेंदोः परिलसतः परिधी इवोभयत्र ४७**

"खचितेति" तथा स एव विश्वकर्मा तेद्वेकुण्डले ददौ कीदृशे खचितो मणीनांचयोययोस्ते तथा तडितः अधिकाद्युतिर्ययोः तथाश्रिताश्रीः शोभायाभ्यां ते श्रिये ये तस्याः कर्णयुग्मंप्राप्य तस्याः मुखरूपऐंदोः उभयत्र परिधीइव परिवेशाविवपरिलसतः यथेकस्मिन्निंदो परिवेशद्वयंस्यात्तर्हितस्याः कुण्डलद्वययुतंवदनमुपमीयतेत्य भूतोपमयाध्वनितं यद्वा कपोलद्वयस्य चन्द्रद्वयतुल्यत्वात्कुण्डल द्वयरूपपरिधिद्वय योग्यतयापूर्वोपमैवास्त्विति चमत्कारातिशयः परिवेशस्तुपरिधिरित्यमरः ॥ ४७ ॥

**अतिविशदविभं तथार्धचंद्रं लसदलिकाभरणं सुरैरथो यत्।**
**मलल्वमपहाय शुद्धमर्धं विधृतमलक्षि सुसारभूतमिन्दोः ४८**

"अतिविशदेति" तथा स एव विश्वकर्मा लसत् प्रकाशमानं अलिकस्य ललाटस्य आभरणं भूषणं अर्धचन्द्रं ददौ कीदृशं अति विशदा उज्ज्वलाविभा यस्यतत् यत् अर्धचन्द्रं देवैरितिवितर्कि इति किं इदमर्धचंद्रं विश्वकर्मणा इंदोर्मललवं कलंकलेश युतमर्धं अपहायत्यक्त्वा यदवशिष्टं शुद्धं निष्कलंकं

सुसारभूतं च अर्घं तदेतत् विहृतमस्ति अन्योपि राजादिभ्यो यत्किंचिद्दस्वर्पयन् तन्निर्मलीकृत्यार्पयति ॥ ४८ ॥

**अपि निखिलभुजेषु चांगदौघं मरकतहीरकपद्मरागखंडैः।**
**विरचितमतिचातुरीधुरीणाम लधिषणापिशुन स्फुटंविधातुः**

"अपीति" स एव च तस्यानिखिलेषु अष्टादशसुभुजेषु अंगदानांकेयूराणांओघं ददौ कीदृशं मरकतहीरक पद्मरागाणां मणीनां खंडैः विरचितं तथा विधातुः अंगदनिर्मातुः अतिशयचातुर्याः धुरीणायाधूर्वहाया अमलधिषणायाः पिशुनंसूचकं एतेषांनिर्मानाति चतुरोस्तीतिसूचकानि ४९

**स्वयमथघटितांश्च हाटकस्याकठिनतया कटकान्प्रति प्रकोष्टम्।**
**प्रकटमकटु कर्णयोर्यदीयंसृजतिमिथोमिलनोत्थशिञ्जितं शम्॥**

"स्वयमिति" स एव च तस्याः प्रकोष्टं प्रकोष्टं प्रतिकटकान् ददौ कीदृशान् हाटकस्य स्वर्णस्य अकठिनया कोमलत्वेन स्वयमेव घटितान् नतुलोहमय साधनैरग्नितापनैर्वा यदीयं यत्संबंधि मिथः परस्परं मिलतादुत्थितं अकटुमधुरं शिंजितंक्वणनं कर्णयोः शंकल्याणं सृजति ददाति भूषणानांतु शिंजितमित्यमरः ॥ ५० ॥

Indira Gandhi National
Centre for the Arts

**सुविमलतपनीयदर्शनीयां निखिलकरांगुलिषूर्मिकावलिंच।**
**यदुपरि खचिताथ नीलकालिः करकमलेष्वलिसंभ्रमं तनोति**

"सुविमलेति" स एव च निखिलासुकरांगुलिषु ऊर्मिकाणां अंगुलीयकानां आवलिं च ददौ कीदृशीं सुविमलेन तपनीयेन स्वर्णेन दर्शनीयां यस्या ऊर्मिकावल्याः उपरिभागेखचितानील कमणीनां आलिः कररूप कमलेषु अलिसंभ्रमं तनोति कररूप कमलेषु इयं भ्रमर पंक्तिरिति भ्रान्तिर्जायते इत्यर्थः अंगुलीयमूर्मिकेत्यमरः ॥ ५१ ॥

**लसदमलरुचिं च कण्ठभूषां निखिलमनोरमतैकसीमभूमिम्।**
**अथ मनुमिव ये मनोजहूतेः क्वणनमिषात्पठतश्च नूपुरे द्वे ५२**

"लसदिति" स एव च कंठभूषांग्रैवेयकं ददौ कीदृशीं लसन्ती अमला रुचिर्यस्याः तथा निखिलाया मनोरमताया एका अद्वितीयासीम्नः अवधेः भूमिः स्थानं स एव च तद्वेनूपुरे मंजीरे ददौ तेके येक्वणनस्य मिषात् व्याजात् मनोजस्य कामस्य हूतेराह्वानस्य मनुंमन्त्रमिव पठतः ॥ ५२ ॥

निधिरथ पयसां तथोपहारं स तदधिकण्ठमचीकरत्स हारम्।
तरलयति समीक्षितुं यदीयस्तरलतरस्तरलो न कस्य चित्तम्॥

"निधिरिति" अथ पयसांक्षीराणां निधिः क्षीरोदः तस्या अधिकण्ठं कण्ठसमीपं शोभनंहारं उपहारं बलिं अचीकरत् अकरोत् यस्य हारस्य तरलतरः अतिचञ्चलः तरलः हारमध्यगोमणिः समीक्षितुं द्रष्टुं कस्यचित्तं न तरलयति चञ्चलीकरोति अपितु सर्वस्यैवेति भावः उपहारः करोवलिरित्यमरः तरलोहारमध्यग इति च॥ ५३॥

परिणतिरहिते सदैकरूपे अपि परमात्मसदृक्षविस्तरे च।
दृगविषयगुणे तथांबरे द्वे श्रितरविभे उपमेयताविहीने ५४

परिणतीति स एव क्षीरोदः द्वेअंबरेवा ससीददौ कीदृशे परिणत्या पटत्वरूपपरिणामेन रहिते तथा सदैव एकरूपे नवितरवासोवज्जातुकच्चरे अपि तथा परामहतीचेयंमा लक्ष्मी परमा महालक्ष्मीरित्यर्थः तस्या आत्मना शरीरेण सदृक्षस्तुल्योविस्तरो ययोस्ते तथादृशोरविषयः अति सूक्ष्मः गुणः सूत्रंययोः तथाश्रिता शशिनोभायाभ्यां अतिभासुनतु अतिशुभ्रे इत्यर्थः कार्यः श्रो महालक्ष्मया रत्नवस्त्रत्वात् श्रितरविभे इति वा पाठः इत्यर्थः तथा उपमेयताधर्मेण विहीने निरुपमे इत्यर्थः अथाप्रस्तुतार्थः ईदृशेद्वेअंबरे आकाशेभातः कीदृशेपरिणत्या अन्यथा भावेनरहिते अतएव सदैकरूपे तथा परमोत्मना अक्षणासदृशोविस्तरो विभुत्वंययोः तथा दृशोरविषयः गुणः शब्दाख्यः ययोः शब्दस्य श्रवणविषयत्वात् यद्यपि दृशोरविषय त्वं स्पर्शादावप्यस्तीत्यतिव्याप्त्या आकाशस्य शब्दमात्रगुणत्वात् स्पर्शादि गुणवत्तापत्तिरपि तथापि यादृक् दृग विषय त्वं शब्दस्य न तादृक् स्पर्शादेरिति सूक्ष्मदृष्ट्या विवेचनीयं कमलादेः कोमलत्वस्य सौरभस्य च ज्ञानलक्षणया चक्षुषापि ग्राह्यत्वात् तथा द्राक्षादेर्मधुरत्वस्य नचयोगादेरपि चक्षुषा मधुर शब्द ग्राह्यतास्तीति वाच्यम् तत्र विशेषतः श्रवणेनैव प्रतीतेः वस्तुतस्तु गूढश्लेषादौ शब्दालंकारेमाति व्याप्त्यादि दोषराहित्यस्यात्यंता पेक्षास्ति पुनः कीदृशेश्रितः रविः भानि नक्षत्राणिचयाभ्यांते तथा उपमेयताधर्मरहिते गगनंगगनाकारमितुरक्तेः अत्र चार्थवशाद्विभक्ति वचनयोः क्वाचित्कपरिणामवशादाकाश पक्षेएक वचनबोध्यम् तस्य द्वितीयत्वात् अंबरंवाससि व्योम्नीति विश्वः॥ ५४॥

उदधिरपिददिःस्रजं स तस्मै म्रदुलतराह्वदितारविन्दवृन्दाम

उरसि शिरसि चापरामदभ्रभ्रमणपरभ्रमरं च केलिकंजम् ५५

"उदधिरिति" समुद्रोपि तस्यै स्रजंमालां ददिः अदात् एकां उरसि अपरां च शिरसि एवं द्वेमालेऽदादित्यर्थः कीदृशीं मृदुलतरं अति कोमल अमर्दितं अम्लानं च अरविंदानां पद्मनां वृन्दं यस्यांसि एवं च केलिकञ्जं क्रीडायोग्यं पद्मं च अदात् कीदृशं अदभ्राः बहवः भ्रमणपराः भ्रमरा यस्मिन् ददिरित्यत्र दाधातोराकारां तत्वाङ्कृतेर्थेकिः प्रत्ययः द्वित्वं च ॥ ५५॥

मणिरचितमदात्स नागहारं विहितसुवेशविशेषमेष शेषः।
अलिततिरुचिरामथाक्षमालां मृदुनि शयांवुशये प्रजापतिस्य॥

"मणीति" अथ एषः धरणिधरः शेषनागः तस्यै शोभनं नागहारं अदात् कीदृशं मणिभिः रचितं तथा विहितः सुवेषस्य विशेषः उत्कर्षोयेनतं अथ प्रजापतिः तस्याः कोमलेकरकमले भ्रमरपंक्तिवत् रुचिरां रुद्राक्षमालां अदात् पद्मशाखः शयः पाणिरित्यमरः ॥ ५६ ॥

अददत सुरया न जातु रिक्तं जितसुधया धनदस्तु पानपात्रम्।
सुरसरिदमलार्णसाथ पूर्णं कनकमयं च कमंडलुं विधाता ५७

"अददतेति" अथ धनदः कुवेरः पानपात्रं अददत कीदृशं जितासुधा अमृतं यया तया सुरया मदिरया जातुकदाचिदपि नरिक्तं पानेकृतेपि पूर्णमिवेत्यर्थः अथ विधाता ब्रह्मास्वर्णमयं कमंडलुं अददत कीदृशं सुरसरितः गंगायाः अमलेन अर्णसाजलेन पूर्णं अत्रापि न जातुरिक्तमिति विशेषणं देयं अददतेतिदददानेधातुराति ॥ ५७ ॥

अथ तुहिनगिरिस्समोदमस्या विमलमनेकविधं सुरत्नजातम्।
अपि विबुधवरैरदृष्टपूर्वं पदनलिनेह्युपढौकयांबभूव ॥ ५८ ॥

"अथेति" हिमाचलः अस्याश्चरणकमले सानंदं शोभनं रत्नजातं अर्पयामास कीदृशं विमलं तथा वहुविधं तथा देव श्रेष्ठैरिन्द्रादिभिरपि अदृष्टपूर्वं पूर्वं दृष्टं दृष्ट पूर्वं न दृष्ट पूर्वं अदृष्ट पूर्वं ॥ ५८ ॥

क्षुरखरनखरे खरांशुनेत्रं विकटसटाजटिलांससुग्रदंष्ट्रम्।
भयमिव तनुमद्द्विषां च मध्येप्सनरमरालसुवालधिं च सिंहम्॥

"क्षुरेति" स एव हिमाचलः सिंहं च ददौ कीदृशं क्षुरवत् खरास्तीक्ष्णाः नखरानखायस्य तथा खरांशुः सूर्यः तद्वत् उग्रेनेत्रेयस्य तथा विकटाभिः सटा

भिः जटिलो अंसौस्कंधोयस्य तथा उग्रादंष्ट्रायस्य तथा युद्धमध्ये द्विषां शत्रूणां तनुभृत् मूर्त्तिधरं भयमिव तथा अराला सुवालधिः शोभनः पुच्छोयस्य । ५९ ।

इति निखिलविभूषणानि वीक्ष्यावयवचये परिधार्यभूषयंतीम्
ददुरथ हरिणैव नोदितास्ते निजनिजमायुध
मुच्छलन्मुदोस्यै ॥ ६० ॥

"इतीति" तेदेवाः इत्यमुना प्रकारेण सर्वाणि भूषणानि चूडामण्यादीनि निजांगसमूहे परिधार्य भूषयन्तींतां भगवतीं वीक्ष्य उच्छलन्तो स्वपुष्पमांतीमुत् येषांते अतिमुदिता इत्यर्थः अथ विष्णुनैव प्रेरिताः अस्यैस्वंस्वं आयुधं च ददुः अन्येतु भूषणैर्भूषिता भवन्ति सातुप्रत्युत स्वांकेषु धारणात् भूषणानि भूषयतिस्मेति चमत्कारातिशयः ॥ ६० ॥

प्रथममथ निमथ्य तिग्मधारात्प्रमथपतिर्निजशूलतोन्यशूलम्।
अतरदवरतासुरौरसासृक्प्रवहनिपानरसज्ञकोटि तस्यै ६१

"प्रथममिति" आदौ प्रमथपतिः शिवः तीक्ष्णधारात् निजशूलात् अन्यत् शूलंनिमथ्य उत्पाद्य तस्यैव्यतरत् ददौ कीदृशं अवतरं असुराणां उरसोजातस्य रक्त प्रवाहस्य निपानेरसताकोटिरग्रभागो यस्य असुरवक्षच्छेदकमित्यर्थः ६१

विलसति विलये यदीयकीलावलिवलित भुवनत्रयं नितांतम्।
विपिनमिव सवन्यशाखिजीवंप्रबलदवानलकीलदह्यमानम् ६२

"विलसतीति" प्रलयकाले यस्य शूलस्य कीलावल्या ज्वालापरंपरया वलितंआवृतं भुवनत्रयंनितान्तंविलसति किमिव प्रबलदवाग्निज्वालयादह्यमानंवनभय वृक्षजीव सहितं विपिनंवनमिव वह्नेर्द्वयोर्ज्वालकीलावित्यमरः ६२

दलितदितिजशांबरीतमस्कं हसितसहस्रसहस्रगुप्रतापम्।
हरिरपि विविधारधारमस्या अभिनवचक्रमुपायनीचकार॥

"दलितेति" विष्णुरपि अभिनवं स्वचक्रात्स्य उत्पादनान्नूतनं चक्रंसुदर्शनाख्यं अस्याभगवत्या उपायनीचकार उपहारं कृतवान् कीदृशं दलितं नाशितंदितिजानां शांबरीरूपं मायारूपंतमोयेन तद्दर्शनेनैव दत्यैरचितामाया विलीयते इत्यर्थः तथा हसितः सहस्राणां सहस्रगूणां सूर्याणां प्रतापोयेन स्वं भद्रयं कोदृशोसोतिहासाभिप्रायः सहस्रसूर्येभ्योप्यधिक प्रताप इत्यर्थः तथा विविधा धाराधाराश्च यस्य स्वाम्नायांशां वरीत्यमरः ॥ ६३ ॥

अरिषु कुलिशकर्कशेषु दृष्टं
क्वचिदपि यत्प्रहृते र्न पौनरुक्त्यम् ।
भ्रमणरयविकीर्णभास्स्फुलिङ्गः
स्फुरति तडित्वगदा मदान्मुदाताम् ॥ ६४ ॥

अरिष्विति सएवविष्णुः तां प्रति तां गदां कौमोदक्याख्यां मुदाऽदात् तां कां वज्रवत्कठोरदेहेष्वपि शत्रुषु यस्याः प्रहृतिः क्वचिदपि समये पौनरुक्त्यं न दृष्टं एकवारमेव प्रहारं कृत्वा शत्रून्नाशयतीत्यर्थः । अथ च यस्या भ्रमणरयेण विकीर्णानां भासां यः स्फुलिङ्गो ऽग्निकणः स एव तडित्भूत्वा स्फुरति अत्र अपि यत् सतामिति पदानि देहलीदीपन्यायेनोभयत्रोपकुर्वन्ति ॥ ६४ ॥

उरुधरणिधरे ष्वशंकपातो
त्थितदहनद्विगुणीकृतात्मरोचिः ।
असुहरणविधौ द्विषां पटीयो
निजकुशात्कुलिशं ददौ शचीशः ॥६५॥

उर्विति शचीशः इन्द्रः स्ववज्रान्नवमुत्पाद्य तस्मै वज्रं ददौ कीदृशं उरुषु बहुषु पर्वतेषु निश्शंकं पातेन उत्थितो यो दहनः तेन द्विगुणीकृता आत्मनो रोचिर्येन तथा शत्रूणां प्राणहरणविधौ अति चतुरं ॥ ६५ ॥

अपि च स हि वलीचकार घंटां
वलमथनोऽभ्रमुवल्लभाद्वलंतीम् ।
प्रवलमपि वलद्विषां न सोढुं
यदनुपमेयरणत्कृतिं रणेऽलम् ॥ ६६ ॥

अपिचेति स एव इन्द्रः अभ्रमुवल्लभात् ऐरावतगजात् घंटांवलीचकार उपहारंकृतवान् कीदृशींवलन्तीं जाज्वल्यमानां यस्या घंटायाः अनुपमेयां रण-

क्षतिं सोढुं युद्धे प्रबलमपि शत्रूणां सैन्यं अलं समर्थं न भवति बलिर्दैत्यप्रभेदे च करचामरदंडयोः उपहारे पुमानस्त्रीजरया श्लिथचर्मणीति विश्वः ॥ ६६ ॥

तदनुहुतभुजाऽप्यऽदायि शक्तिः
क्वचिदऽपि न स्खलनात्स्फुटेव शक्तिः ।
न च भवति निवर्त्तनं यदीयं
रिपुनिवहं युधि भस्मसात् कृत्वा ॥ ६७ ॥

तदन्विति तत्पश्चात् अग्निनापि तस्मै शक्तिः अदायि दत्ता कीदृशी क्वचिदपि शत्रौ न स्खलनात् न मोघीभवनात् स्फुटा मूर्तिधरा शक्तिः पराक्रम इव यस्याश्च शक्त्या निवर्त्तनं परावृत्तिः युद्धे शत्रुसमूहं भस्मसात् सर्वं भस्म न कृत्वा न भवति शत्रून् भस्मीकृत्यैव निवर्त्तते नान्यथेत्यर्थः अनेन तस्याः प्रहारं कृत्वा पुन र्निवर्त्तनमपि दर्शितं इति सामान्यनिर्देशादन्येषामप्येवमेवबोध्यम् तदधीन कात्र्स्न्ययोर्वासात् शक्तिरायुधभेदेस्यादुत्साहादौबले स्त्रियामिति हेमचन्द्रः॥६७

श्रवणगतगुणं परैरभेद्यं
समितिचरै रविलक्षितागमैश्च ।
कृतरिपुगणभेद माशुगैः स्वै र्ददि
रनिलो ऽपिदृढंधनुःप्रधानम् ॥ ६८ ॥

श्रवणेति अथ वायुः तस्मै प्रधानं श्रेष्टं दृढं च धनुर्ददौ कीº समिति युद्धे श्रवणगतः कर्णपर्यन्तं प्राप्तः गुणोऽज्या यस्य तथा परैः शत्रुभिः भेत्तुमशक्यम् दृढत्वात् तथा स्वैः स्वस्मान्निसृतैः आशुगैर्वाणैः कृतो रिपुगण भेदो येन कीदृशैः वाणैः चरैः चंचलै तथा शत्रुभिरविलक्षितः अज्ञातः आगमः प्राप्ति र्येषां तैः चंचलत्वात् अत्र धनुषो महामात्रेणापि सादृश्यं श्लेषेण प्रतीयते तथाहि धनुः प्रधानं महा मात्रात्मकं कीदृशं प्रधानं दृढं नीतिकार्येष्वशिथिलं तथा राज्ञां श्रवणे कर्णे गतो गुणो मंत्ररूपो यस्य गूढमंत्रमित्यर्थः तथा परैः शत्रुभिर्दानादिना स्वप्रभोर्भेत्तु मशक्यं तथा चर गूढपुरुषैः कृतो रिपुगणस्य भेदो

येन कीदृशैः चरैःसमिति युद्धे अविलम्बितः जटादिधारकतया अज्ञातःआगमो येषां तैः तथा आशु शीघ्रं गच्छंतीतितैः प्रधानं स्यान्महामात्रे प्रकृतौ परमात्मनि प्रज्ञायामपि च क्लीबमेकत्वेतूत्तमे सदे तिविश्वः ॥ ६८ ॥

शरधि मपि स एव तेन साधं
व्यतरदमोघशरौघरस्य मस्यै ।
अपि बहुषु विनिसृतेषु कोशा
दिषुषु पुन र्न जहातिपूर्णतां यः ॥ ६९ ॥

शरधिमिति स एव वायुः तेन धनुषा सार्धं अस्मै शरधिं निषङ्गमपि व्यसृजत् कीदृशं अनिष्फलेन बाणसमूहेन नरस्य यः शरधिः युद्धे कोशात् बहुषु बाणेषु निसृतेष्वपि पुनः पूर्णतां न त्यजति सदा परिपूर्णमित्यर्थः ६९।

नच रुधिर परिस्रुतिं रिपूणां न च कुरुते खलु मर्मभेदनं यः
व्यसृजदथसपाशभृत्स्वपाशंद्विषदसुकर्षणमात्रशालिनं तम् ॥

नचेति अथ पाशभृत् वरुणः स्वपाशं व्यसृजत् यः पाशः संग्रामे परिक्षिप्तः खड्गादिवत् रिपूणां रुधिरपरिस्रुतिं न कुरुते तथा यः गदादिवत् रिपूणां मर्मभेदनमपि न कुरुते तर्हि किं करोत्यत आह को० पाशं रिपूणां प्राणनिष्कासनमात्रमेव शीलमस्य कण्ठादिकं निपीड्य प्राणानेव कर्षति न च रुधिरादिविमोचणं कुरुत इति भावः ॥ ७० ॥

अधिकमुपचिते गंभीरनादै र्चयघनघोषतिरस्क्रियाकरिष्णुम्
दितिजदितिजदारगर्वगर्भप्रमथनमप्यतिरार्पिपञ्च शंखम् ॥७१

अधिकमिति स एव अपांपति र्वरुणः शंखं च आर्पिपत् को० अधिकं यथा स्यात्तथा वृद्धिं प्राप्तै र्गंभीरनादैःकृत्वा प्रलयकालीनमेघनादस्य तिरस्कारकरणशीलं तथा दितिजानां दितिजदाराणां च क्रमेण गर्वं अहंकारं गर्भं च प्रमथातीति तादृशं यन्नादं श्रुत्वा दैत्यानामहंकारो नश्यति दैत्यस्त्रीणां च गर्भच्छेदो भवतीत्यर्थः ॥ ७१ ॥

अथपरिघमदात्स विश्वकर्मादनुजवधूविधवाविधानबीजम् ।
मन इव विषयैस्स्वयोगभाजां दृढमथ वर्मपरायुधैरभेद्यम् ॥

अथेति स विश्वकर्म्मा तस्यै परघं अदात् को० दैत्यस्त्रीणां विधवाविधाने बीजं कारणं दैत्यनाशकत्वात् अथ स एव वर्म्म कवचं च अदात् को० परेषां आयुधैरभेद्यं कैः किमिव विषयैः रूपादिभिः योगभाजां मन इव यथा तत्र भिद्यते तद्वदित्यर्थः ॥ ७२ ॥

अतितनुषु तनूरुहेषु तस्या निजकिरणप्रकरं ससर्ज सूर्य्यः ।
कवलयति विलोकितोप्यसून्यस्तु मदित तस्य सुतस्तु काल दण्डम् ॥ ७३ ॥

अतीति अथ सूर्यःतस्याः अतिशयेन सूक्ष्मेषुरोमसु निजकिरणानां समूहं ससर्ज अथ तस्य सूर्यस्य सुतः यमस्तुनं काल दंडं अदित तं कं यः कालदंडः विलोकितो दृष्टोपि असून् प्राण न् कवलयतिग्र सीकरोति ॥ ७३ ॥

अपरमिव तमेव दुर्निरीक्ष्यं सुरजननी करवालमापकालात्
अथ सदृश मनेन कुण्ठितद्विट्प्रहरणसंहतिचर्म्मचाष्ट चन्द्रम्

अपरमिति अथ सुरजननो भगवतो कालात् निमिषाद्यभिमानिदेवतायाः करवालं खड्गं आपकालस्तस्यै खड्गं ददा वित्यर्थः को० अपरं द्वितीयं तं कालमेवेत्र दुःखेन द्रष्टुं योग्यं एवकारो दुर्निरीक्ष्यत्वादिना तत्सादृश्या संशयत्वसूचकः अथ तस्म'देव कालात् साचर्म फलकं च आपको० अनेन खड्गेन सदृशं तुल्यं तद्योग्य मितार्थः तथा कुंठिता द्विषां प्रहरणानामायुधानां संहतिर्येन तेषा मकिंचित् करत्वात् तथा अष्टसंख्याकरत्नादिघटितचंद्राकार सहितम् ॥ ७४ ॥

निजनिजमपरैरपीत्थमेव प्रहरणमाभरणं मुदापहृत्य
कृतनतिनुतिभिस्सुमानिता सा सदसि सुरे नितरांरराजदेवी

आयुधदानमुपसंहरन्नाह निजनिजमिति अपरै रनुक्तैरपिदेवैरित्थमनेनैव प्र ारेण निजं निजं प्रहरणं आयुधं आभरणं भूषणं च मुदा उपहृत्य तस्या उपहारं कृत्वा सदसि सभायां सुमानिता सा देवी नितरां रराज को०

देवैः श्रता नतयः नुतयाः स्तुतयश्च यैः अत्र मूलं मूलादिविनिःक्रम्य ददौ तस्यै पिनाकभृदित्यारभ्य अन्यैरपि सुरैर्देवीभूषणै रायुधै स्तथा संमानितेत्यंतं मार्कंडेयपुराणांतर्गत सप्तशतीस्तोत्रात्प्रमाणमवसेयम् अत्र शिष्टं तु देवी भागवतादेव ॥ ७५ ॥

**लसंतीं भूषाभिः करकलितघोर प्रहरणां कृपा पूर्णापांगीं स्मितसुदृशभुजाम् सरोषां दैत्येंद्रे कृततदतिकुत्सां दिविषदः सदा शांताकारां मुमुदिव वुद्वीक्ष्येति रसिनः ॥ ७६ ॥**

लसंतीमिति ते रसिनः शृंगारादि नवरसभावविदो देवाः तदा तां महालक्ष्मीं इत्येवं विधां वीक्ष्य मुमुदिरे इति कीदृशीं भूषाभिश्चूडामण्या-दिभिर्लसंतीं भूषणानुकलनोपनीतया शोभया जनितशृंगाररसा मित्यर्थः तथा करैः कलितानि गृहीतानि घोराणि भयानकानि त्रिशूलादीनि प्रहरणान्यायुधानि यया अनेन तस्या भयानकवीररसविषयत्वं व्यज्यते तथा कृपया पूर्णः अपांगो नेत्रांतो यस्याः अमी मद्भक्ता देवाः दुःखो भवंतीति सा नुग्रहशो शोभोलित करुणरसामित्यर्थः तथास्मितेन शोभता दृक् यस्याः अहो किममी शिवादयः समर्था अपि तृणतुल्यान्महिषादिभ्यतीति मंद स्मितोदितहास्य रसां तथा अष्टादश मिताभुजा यस्याः अनन्य साधारणै रष्टादशभिर्भुजै रुत्पादिताद्भुतरसां तथा दैत्येंद्रे महिषे सरोषां महिषकृताव-ज्ञासंचिंतनोन्मिषयत्क्रोधोत्पन्न रौद्ररसां तथा कृता तस्या महिषस्यैव अति कुत्सा यया तस्य विनाशोन्मुखत्वात्कृतकुत्सन जातवीभत्सरसां तथा-सदैव शांत आकारो मूर्तिर्यस्या वस्तुतस्तु शांतरूपा मेवेत्यर्थः अत्र शांतर-सोनवमोव्यज्यते तथा च दशरूपके न यत्र दुःखं न सुखं न चिंता न द्वेषरागौ न च काचिदिच्छा रसः प्रशांतः कथितो मुनींद्रैः सर्वेषु भावेषु च मूयमाण इति अत्र मिथो विरोधिनामपि शृंगारादीना नवरसानामेकत्रस्थापने न दोषास्पदं भिन्नविषयत्वात् अत्र च लसंती भूषाभि रित्यत्र करकलित घोरप्रहरणा मित्यत्र अष्टादशभुजा मित्यत्र च शृंगारादीनां रसाना मुत्प त्त्याश्रयत्वं देवानां अन्यत्र तु भगवत्या एवेति विशेषोऽवसेयः अनुक्रमेण रस मात्रवर्णने एव कवेः प्रतिपादयिषितत्वात् ॥ ७६ ॥

नो जायतीति जननं जगतां जनन्या जानीमहे जनित मद्य
निजोदयं हि इत्यंजसा सुमनसो मनसावगत्य प्रोचु स्त मर्थं
मथतां हितमर्थ यन्तः ॥ ७७ ॥

नोइति अस्या जगतां जनन्याः जननं उत्पत्तिर्नो जायटीतिनयुक्तं भवति जगजननीत्वात् अनवस्थाप्रसंगाच्च तर्हि किं जातमित्याहुः अयं तु निजस्य उदयं भाग्यमेव जनितं जानीमहे ते देवाः इति मनसा अंजसा सम्यक् निश्चित्य अथ स्वहितं प्रार्थयंतः तां प्रतितमेवार्थं मनसि चिंतितं प्रोचुः ॥ ७७ ॥

त्रिभुवनजनयित्र्याः क्वा स्त्यपेक्षा स्मदस्त्राभरणरुचिभिरुच्चै
र्हेतु मत्रापि विद्मः भगवति करुणां ते माकृथा स्त द्विलंबं
महिष जनितभीते स्त्राहि रक्षावपाहि ॥ ७८ ॥

किमूचुरित्याह त्रिभुवनेति हे भगवति त्रिभुवन जनयित्र्यास्तव अस्मदीयैरस्त्रैः आभरणे भूषणैः रुचिभिस्तेजोभिश्च उच्चैरुत्कृष्टाक्वैव अपेक्षास्ति निखिलकारणत्वात्परिपूरणत्वाच्च न कापीत्यर्थः तर्हि किमर्थं मया गृहीता इत्याहुः हे भगवती अत्रापि अस्त्रादिग्रहणे तव करुणामेव हेतुं विद्मः अस्मद्विषयिण्या कृपयैव त्वया गृहीता नान्यथेति भावः तत्तस्मात् करुणा हेतोः विलंबं मा कृथाः न कुरु कस्मिन्नर्थे इत्याहुः हे देवि महिषात् जनितभीतेः कस्मात् त्राहि रक्ष अवपाहि त्राहीत्याद्येकार्थाभ्यासोत अवश्यमेव रक्षेति ज्ञापकः बहूनां पृथगुक्तिर्वा सर्वमुख्यत्वाच्चतुर्मुखस्यैव वा ॥ ७८ ॥

सेत्याकर्ण्य गिरं सुधातिमधुरा मूचे सुधाभोजिनाः
किं यूयं विबुधा बुधा अपि मुधा मुग्धा स्तृणारेर्दरात्
मत्क्रोधाहितभालजातभ्रुकुटीभ्रूभङ्गरौद्राननं
वीक्ष्यासौ कुणपायते मृतिरपि त्रासोपि संत्रस्यति ॥ ७७॥

सेति सा भगवती इति तेषां वाचमाकर्ण्य तान् सुधाभोजिनः देवान्प्रति सुधातोप्यतिमधुरां गिरमूचे हे विबुधाः देवाः यूयं बुधाः कुशला अपि अस्मात् तृण तुल्यात् अरेर्महिषस्य यद्वा तृणाना मरे र्भक्षकस्य महिषस्य दरात् भयात् किं मुधा वृथैव मुग्धाः मूढाः जाताः ननु त्रैलोक्यजेता महिषः कथं तृणायमन्यते इति तेषामाशयं ज्ञात्वा स्वप्रभावातिशयं दर्शयति हे देवाः क्रोधेन आहितःयुक्तो यो भालस्तस्मिन् जातया भ्रुकुट्या भ्रुवोर्भंगेण कौटिल्येन च रौद्रं मम मुखं वीक्ष्य असौ मृतिरपि कुणपः शवस्तद्वदा चरति सर्वजन शवीकारकतया प्रसिद्धोपि मृत्यु र्यदि शवो भवति किं पुनर्महिषादयः कीट प्राया इति कैमुत्य न्यायेन बोध्यम् तथा एतादृशं ममसुखं वीक्ष्य स्वयं त्रासोपि संत्रस्यति का पुनर्महिषादीनां कथेति ध्वनिः मुग्धस्तु सुंदरे मूढे इति मेदिनी भंगस्तरंगभेदे च रुग्विशेषे पराजये कौटिल्ये भयविच्छित्यो रिति हैमः। कुणपः शवमस्त्रिया मित्यमरः अतिशयोक्तिरलंकारः ॥ ७७ ॥

इत्युक्तिं साट्टहासां सरभसमुदितां चण्डिकायाः प्रचण्डा
माकर्ण्या सीदसीमत्रिभुवनमभितः साचला भूश्चकंपे
वेलातिक्रांतिभीतिक्षुभितजलचरा क्रुष्टकोलाहलाढ्याः
पाथोनाथाविनाथा विपथमभियुः साध्वसं विद्विषश्च ॥७८॥

इत्युक्तिमिति इत्येवं विधां तस्याश्चंडिकायाः कोप शीलायाभगवत्याः अट्टहास सहितां सरभसं सावेशं च उदितां उच्चरितां प्रचंडां अत्युत्कृष्टां च उक्तिं आकर्ण्य त्रिभुवनमपि असीम उल्लंघित स्वस्वमर्यादमासीत् तथा अचलैः पर्वतैः सहिता भूः पृथ्वीचकंपे तथा पाथोनाथाः सप्तसमुद्रा अपि विनाथा दीनाः संतः विपथं अनियतमार्गं प्रतिययुः कीदृशाः वेलायाः स्वमर्यादाया अतिक्रांत्या उल्लंघनस्य भीत्या क्षुभिताः क्षोभं प्राप्ता ये जलचराः मकरादयः तैराक्रुष्टेन उच्चरितेन कोलाहलेन कलकलशब्देन आढ्याः युक्ताः तथा विद्विषः महिषादयः शत्रवः साध्वसं आः किमेतदिति भयं प्रापुः अब्ध्यंबुविकृतौ वेलाकाल मर्यादयोरपोत्यमरः भीतिर्भीः साध्वसं भय मिति च ॥ ७८ ॥

श्रीमाञ् शंभो स्वचरणसदनौ भूतहृच्छंभुनाथो
लक्ष्मीनाथं कविपरिवृढं देशिकोसूतयं माम्
तेनोद्गीते महिषनिधने गीतलक्ष्मीचरित्रे
लक्ष्मीकाव्ये विरति मगमत् पंचमः सर्ग एषः ॥ ७९॥

श्री मानित्यादि पूर्ववत् ॥७९॥

इति लक्ष्मीकाव्ये पंचमः सर्गः ॥ ५ ॥

इति श्रीलक्ष्मीकाव्यव्याख्यायां पंचमः सर्गः ॥ ५ ॥

---



ॐ नमः श्रिये कश्मलं त्रिजगता मथ हन्तुं
स्वर्नदीव भुवि सा ववतार।
तत्कुतूहल मथेक्षितु मासीत्
खे घनेषु पिहितः सुरसङ्घः॥ १॥

ॐ नमो विघ्नहर्त्रे अस्मिन्सर्गे महिषमंत्रिमंत्रं वर्णयिष्यति तावन्महालक्ष्म्याः पृथिव्या मवतरणमाह कश्मलमिति अथ देवतेजोभ्यः प्रादुर्भवनभूषादिग्रहण संलापानंतरं सा श्रीमहालक्ष्मीः त्रिजगतां कश्मलं दुःखं हंतं स्वर्नदीगंगेव भुवि पृथिव्या अवततार अथ तस्याः कुतूहलं द्रष्टुं देवस रूह आकाशे मेघेषु पिहितः तिरोभूतः आसीत् अत्र तिरोहितानस्मान्महिषोपि न द्रक्ष्यति सर्वं कौतुकमपि द्रक्ष्याम इत्याशयेन तत्र लीना आसन्निति भावः अस्मिन्सर्गे स्वागतावृत्तम् स्वागतेति रनभाद्गुरु युग्ममिति लक्षणात् ।.१

तत्र विंध्य इति नाम विनाशं प्रापितो घट भुवापि स भूभृत्।
भूय उच्चपदवीं विजगाहे ध्यासित स्त्रिजगतां जनयित्र्या॥२॥

तत्रेति तत्र भुवि विन्ध्य इति नाम पर्वतः पुरा मेरुस्पर्द्धया रविमार्गरोधार्थमुच्छ्रोयमाणः पश्चात् घटभुवा ऽगस्त्येन विनाशं प्रापितोऽपि त्रिजगतां जनन्या ऽध्यासितः सन् भूय उच्चपदवीं विजगाहे प्राप भगवती श्रिति महिम्नेति भावः॥ २॥

सैरिभोप्यथ निजस्पश वक्त्रात्तत्स्वरूप मति मञ्जुनिशम्य
मन्मथोन्मथितहृन्निज माराद्राजुहाव सचिवं स्मृतिनुन्नः॥ ३॥

सैरिभोपीति अथ महिषोपि निज चारमुखात् तस्या महालक्ष्म्याः स्वरूपं अति सुंदरं श्रुत्वा कामेन पीड़ित हृदयःसन् निजं सचिवं काम कला कुशलं आरात् समीपे आजुहाव आमंत्रयामास को० महिषः स्मृत्यानुन्नः प्रेरितः एतच्चिकीर्षितस्यावश्यं मृत्युर्भविष्यतीति भावः आराद्दूरसमीपयो रित्यमरःअपसर्पश्चरः स्पश इत्यमरः॥ ३॥

मंत्रिनायक मनः कुरु गन्तुं तत्प्रवृत्तिमवगंतु मितोंग तत्र
ताहृश मुपाय मुपेया येन सा भजति मे महिषीत्वम् ॥ ४ ॥

तमाहूय किमूचिवानित्याह मंत्रीति हे मंत्रिश्रेष्ठ तस्या देव्याः प्रवर्तिकाऽस्ति किमर्थमागतेत्यादि व्यवहारं अवगंतुं ज्ञातुं इतो ऽस्मात् स्थानात् तत्र गंतुं मनःकुरु तत्र याहीत्यर्थः अथ च हे अंगमित्र तत्र गत्वा ताहृशं उपायं उपेयाः प्राप्नुयाः येनोपायेन सा देवी मम महिषीत्वं पटराज्ञीत्वं भजति मे महिषस्य स्त्रीत्वात्तस्या महिषीत्वं युक्त मेवेति श्लेषेण ध्वनितम् ॥ ४ ॥

देव यद्दिशसि त न्मयि सर्वं त्वत्प्रसादजुषि सिद्धमवैहि ।
तत्पदोरिति निपत्य तरस्वी निर्ययौ कतिपयै र्भृतकैस्म ॥ ५

अथेत्याज्ञप्तो मंत्री प्रति वक्ति देवेति हे राजन् यत्त्वं दिशसि आज्ञापयसि तत्सर्वं कार्यं तव प्रसादसेविति मयि सिद्धमेवेति जानीहि सवेगशीलः मंत्री इति वदन् तस्य महिषस्य पादयोः निपत्य कतिपयैः परिमितैः सेवकैः सहपुरात् वहिर्निर्ययौ ॥ ५ ॥

तामुपेत्य सहृशो घनसारं सस्मितं कुवलयं भ्रमयन्तीम् ।
ऊचिवान् समुचितैस्सु वचोभि स्सच्छलं छल मपि छलयन्तीम् ॥ ६

तामिति सःमंत्री तां देवीं प्राप्य ददर्शेति शेषः कीहृशोघन सारं कर्पूरंतौ कर्पूरं हिनेत्रयोः सुखं ददाति तथा स मंद हास्यं कमलं भ्रमयंतीं अथ तां छलमपि छलयंतीं भगवतीं सच्छलं यथा स्या त्तथा समुचितैः तत्कालोचितैः सुवचोभिःऊचिवान् छलमपि छलयितुं समर्थाया स्तस्या अग्रे सच्छलोक्तिर्हास्यास्पद मेति भावः ताहृशो घनसार मिति पदद्वये लिंगवचनभेदेपिवेदाः प्रमाणमितिवत् विभक्ति रेकैवेत्यत उपमानतां प्राप्नोति यद्युक्तं लिंगसंख्या विभेदे पिह्युपमानोपमेयतां विभक्तिः पुनरेकैवचोपमानोपमेययो रिति अथ कर्पूर मस्त्रियां घनसारश्चंद्रसंज्ञइत्यमरः ॥ ६ ॥